विज्ञानभिक्षुप्रणीतः

# सांख्यसारः

रामशंकर भट्टाचार्य

एम० ए०; पी-एच० डी०; व्याकरणाचार्य

भारतीय विद्या प्रकाशन

वाराणसी ❀ दिल्ली

ीलाल ग्रन्थमाला नं० २

विज्ञानभिक्षुप्रणीतः

# सांख्यसारः

( सटीकः )

टीकाकार

रामशंकर भट्टाचार्य

एम० ए०; पी-एच० डी०; व्याकरणाचार्य

प्रकाशक

भारतीय विद्या प्रकाशन

वाराणसी ❀ दिल्ली

( भारत )

( १ ) पो० बाक्स नं० १०८, कचौड़ी गली, वाराणसी-१
( २ ) १, यू० बी, जवाहर नगर, बंगलो रोड, दिल्ली-७

संशोधित तथा परिवर्धित द्वितीय संस्करण १९७८

मूल्य : पुस्तकालय संस्करण रु० ८·००
छात्र संस्करण रु० ४·५०

मुद्रक :

दी कृष्णा प्रेस एण्ड पब्लिकेशन
के० ५७/१९१, सीताराम भवन, नवापुरा
वाराणसी।

स्वामी [illegible] सरस्वती -
वेदान्तशास्त्राचार्य, अनुसन्धाता

# प्रस्तावना

ऋषये परमायार्कमरीचिसमतेजसे ।
धर्ममेघप्रतिष्ठाय शान्ताय गुरवे नमः ॥

अथेह प्रस्तूयते विज्ञानभिक्षुकृतः सांख्यसारः सटीकः । प्रकरणग्रन्थोऽयं यद्यपि सरलया भाषया प्रणीतस्तथापि सन्त्यत्र वाक्यानि यानि व्याख्यानार्हाणि । सर्वाणीदृशानि वाक्यानि यथासंभवम् अस्माभिः टीकायां व्याख्यातानि ।

भिक्षुप्रणीत-ग्रन्थादिविषये भिक्षुकालविषये च यदस्माकं वक्तव्यं तदस्मत्कृतसांख्यभाष्यग्रन्थनिवेदनायां द्रष्टव्यम् ( ग्रन्थोऽयं भारतीयविद्याप्रकाशनसंस्थयैव प्रकाशितः ) ।

यतः वेदान्तकौस्तुभप्रभाकारस्य केशवभट्टस्य ( पञ्चदशशताब्दीभवस्य ) मतं साक्षाद् भिक्षुणा स्मृतम्, अतः स पञ्चदशशताब्दीपरभव इति विज्ञायते । तथाहि—

उक्तं विज्ञानभिक्षुणा—"यत् तत्र वेदान्तिब्रुवः कश्चिदाह—सांख्यप्रणेता कपिलो न विष्णुः, किन्तु अग्न्यवतारः कपिलान्तरम्, 'अग्निः स कपिलो नाम सांख्यशास्त्र - प्रवर्तकः' इति स्मृतेः ( वनपर्वणि सांख्ययोगप्रवर्तक इति पठ्यते, २२०।२१ ) इति, तल् लोकव्यामोहनमात्रम्" (सांख्यसू० ६।७० भाष्ये) ।

दृश्यतां केशवभट्टस्य वाक्यम्—"श्रुतिविरुद्धस्मृतिप्रवर्तकस्तु अग्निवंशजो जीवविशेष एव, न कर्दमात्मजः—कपिलो वासुदेवाख्यः सांख्यं तन्त्रं जगाद ह । ब्रह्मादिभिश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥ तथैवासुरये सर्ववेदार्थैरुपबृंहितम् । सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह ॥ सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम् ॥ इति पाद्मात् । कपिलं परमर्षि च यं प्राहुर्यतयः सदा । अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः ॥ इति वनपर्वणि अग्निवंशवर्णने मार्कण्डेयवचनाच्च" ( वेदान्तकौस्तुभप्रभा २।१।१ ) ।

सांख्यसिद्धान्त-विषये अस्माकं मतानि भिक्षुमतेभ्यो नितरां भिद्यन्ते । भिक्षोः सांख्यविषयकं मतं प्रायेणासंगतमेवेति अस्माकं दृष्टिः । टीकायां भिक्षुवाक्यानि व्याख्यातानि अस्माभिः, न तानि समीक्षितानि । सांख्यविषयाणि यान्यस्माकं मतानि तानि अन्यत्र विवृतानि ।

सांख्यसारग्रन्थे भिक्षुणा यानि मतानि प्रस्थापितानि, विशेषेण प्रतिपादितानि वा, तेषां लघु विवरणमत्र प्रस्तूयते—

( १ ) आत्मा वस्तुतः सुखदुःखातीतः; सुखदुःखानुभवो बुद्धेरेव ।

( २ ) चेतनोऽहम् अचेतनात् प्रकृत्यादेर्भिन्न इति यज् ज्ञानं तदेव मोक्ष-साधनम् ।

( ३ ) आदौ निर्विकल्पात्मक आत्मसाक्षात्कारः, ततश्च सविकल्पिका विवेकख्यातिः । अनया ख्यात्या अविद्या निवर्तते ।

( ४ ) आत्मा प्रकृत्यादिभिन्न इत्येव विवेकज्ञानम् ।

( ५ ) विवेकज्ञानम् अविवेकं स्वयमेव नाशयति, अतएव विवेकज्ञानं मोक्ष-साधनमित्युच्यते । विवेकज्ञानेन अविद्यानाशद्वारा मोक्षः साध्यते ।

( ६ ) आत्मनिर्विकल्पज्ञानम् परम्परया अविद्यानिवृत्तिसाधनम्, अतस्तद् मोक्षोपकारकम् ।

( ७ ) विवेकज्ञानं मोक्षे मुख्यं कारणम् । सर्वात्मज्ञानं विवेकज्ञानोत्पत्तौ कारणम् ।

( ८ ) जीवब्रह्मैक्यज्ञानं विवेकज्ञानस्याङ्गम् । ऐक्यज्ञानमिदं देहाद्यभिमान-निवर्तकम् ।

( ९ ) विवेकख्यातिजन्या वासनाः मिथ्याज्ञानवासनाः समूलघातं हन्ति, ततश्च तासामनुदयः ।

( १० ) यत आत्मा नित्यत्वादिधर्मवान्, अत आत्मा तद्वत्तया साधयितुं शक्यते ।

( ११ ) आत्मा स्वामी, यतः स स्वप्रतिबिम्बितसंस्कारजनकवृत्ति-प्रकाशकः ।

( १२ ) आत्मरूपं ज्ञानं न गुणात्मकं कर्मरूपं वा; आत्मा स्वयंप्रकाशः = स्वातिरिक्तज्ञानान्तराविषयः । आत्मप्रकाशोऽजन्यः ।

( १३ ) अनुभवरूप आत्मा बुद्धिवृत्तिद्वारा स्वात्मनि प्रतिबिम्बितं वस्तु पश्यति ।

( १४ ) बुद्ध्यादयो जडरूपा नैवं पश्यन्ति ।

( १५ ) आत्मनः याऽऽनन्दरूपता सा दुःखाभावरूपतैव ।

( १६ ) आत्मनि यः प्रेमा तत्र आत्मत्वमेव प्रयोजकम् ।

( १७ ) विवेकानुभवकारणं योगोऽष्टाङ्गः ।

( १८ ) आत्मनः शक्यतावच्छेदकधर्माभावेन तस्य शब्दागोचरत्वम् ।

( १९ ) आत्मनो भोगो गौणः, बुद्धेर्भोगो मुख्यः ।

( २० ) बन्धमोक्षौ बुद्धेरेव, नैकरूपस्यात्मनः ।

( २१ ) सर्वात्मनामविभाग एव आत्माभेदः ।

( २२ ) असंगे अपरिणामिनि पुरुषे य उपाधिसंयोगः स प्रारब्धकर्मक्षयादेव नश्यति ।

( २३ ) मूलभूताविद्यानिवृत्त्या तत्कार्यभूतानाम् अस्मिता-राग-द्वेषाभिनिवेशानां निवृत्तिर्भवति ।

( २४ ) कर्मणां विपाकारम्भे क्लेशानां सहकारिताऽपरिहार्या । क्लेशरूपसहकार्यभावेन कर्मणां विपाकानाम् ( जात्यायुर्भोगरूपाणाम् ) अभावो भवति, अतः न पुनः सुखादीनामुत्पत्तिः ।

( २५ ) प्रारब्धकर्मणां दाहे सत्यपि यावद्विपाकं देहो ध्रियते; सेयं जीवन्मुक्तावस्था ।

( २६ ) विवेकज्ञानं कर्मदाहकम् । दग्धानि कर्माणि विद्यमानान्यपि न विपाकोत्पादने समर्थानि भवन्ति ।

( २७ ) चित्तलये कर्माशयस्य लयो भवति । लयः = कारणे अतीतावस्थयाऽवस्थानम् ।

( २८ ) ज्ञानं यथा क्लेशानाम् उच्छेदकं तथा प्राचीनकर्मणां दाहकं च । ज्ञानात् क्लेशाख्यसहकार्युच्छेद एव कर्मदाहः ।

( २९ ) गृहीतार्थाकाराया बुद्धेरपि प्रतिबिम्बो भवति पुरुषे । पुरुषे अर्थानामिदं प्रतिबिम्बनमपरिहार्यम् ।

( ३० ) प्रकृतेः प्रतिपुरुषं भिन्नतया आनन्त्यम् । एवं महदादीनामपि ।

( ३१ ) विवेकोपयोगि यद् दृश्यत्वं तद् बुद्धिवृत्तितदारूढपदार्थानामेव ।

( ३२ ) चेतने प्रतिबिम्बनादेव बुद्धिवृत्तेः, वृत्तिविषयस्य च भानं भवति । विषयदेशे जायमाना इयं वृत्तिः विभौ आत्मनि प्रतिबिम्बते । बुद्धिवृत्तेरेव साक्षाच् चेतने प्रतिबिम्बन-सामर्थ्यम् ।

( ३३ ) निर्मलायां बुद्धौ आत्माकारा वृत्तिर्जायते—अहमात्मा अस्मीति । प्रमाणरूपेयं वृत्तिश्चेतने प्रतिबिम्बिता भवति । इदं पुरुषनिष्ठं फलम् ।

( ३४ ) बुद्धौ चैतन्ये चान्योन्यप्रतिबिम्बनं भवति । अर्थोपरक्तबुद्धिस्फुरणाय चेतने बुद्धिप्रतिबिम्ब आवश्यकः । बुद्धौ चेतनप्रतिबिम्बः चिच्छायापत्तिरित्युच्यते ।

( ३५ ) सत्त्वादीनां यत् सुखाद्यात्मकत्वमुक्तं तत् सत्त्वादिना सुखादेः सामानाधिकरण्यप्रतीतेः, भेदाभेदयोः प्रमाणसिद्धत्वाद् अभेदविवक्षया ।

( ३६ ) सत्त्वादीनामसंख्यव्यक्तिकत्वम् ।

( ३७ ) प्रकृतेः परिच्छिन्नापरिच्छिन्नोभयरूपत्वम् । प्रकृतेः प्रतिसर्गं प्रतिपुरुषं च भोग्यतया अभेदान् न भेदः, अतश्च एकत्वम् ।

( ३८ ) सात्त्विकादहंकारान्मनः; इन्द्रियाधिष्ठातृदेवताश्च जायन्ते । राजसादहंकाराद् इन्द्रियाणि, तामसादहंकारात् तन्मात्राणि जायन्ते ।

( ३९ ) प्रकृतेः कार्यजननशक्तेरुद्बोधकतया ईश्वरोऽङ्गीकरणीयः ।

( ४० ) कालकर्मादयोऽपि अस्मिन् उद्बोधन-कर्मणि सहायकाः ।

( ४१ ) स्वयंभुव ईश्वरस्य सर्वात्मकत्वं खलु अविभागलक्षणम् । तस्य व्यापकत्वं च सर्वकार्याविभक्तत्वम् ।

( ४२ ) आद्यौ मोहापरनाम्नी अविद्या उत्पद्यते, ततश्च अस्मिता-राग-द्वेषाभिनिवेशा यथाक्रममुत्पद्यन्ते ।

( ४३ ) जन्मादिषु रागस्यैव कारणता, परन्तु सर्वक्लेशानुगततया अविद्याया एव मूलकारणत्वम् ।

( ४४ ) दुःखनिवृत्तेरात्यन्तिकत्वम् = निवृत्तस्य दुःखस्य पुनरनुत्पत्तिः ।

सांख्यसारस्य द्वे टीके प्रचलिते । एका म० म० कालीपदतर्काचार्यविरचिता प्रभा-नाम्नी, अपरा च रमेशचन्द्रतर्कतीर्थनिर्मिता विवेकप्रदीपाख्या । यतोऽनयोः टीकयोः साहायकं गृहीत्वास्माभिर्नवीनेयं लघ्वी टीका प्रणीता, अतः कृतज्ञेन मया विद्यार्हन्तीचरणाभ्यां टीकाकृद्भ्यां सहस्रशो धन्यवादाः प्रदीयन्ते ।

भिक्षुमतानि वाचस्पत्यादिभिः सांख्य-योग-व्याख्यातृभिर्न सर्वत्र स्वीकृतानि—इति विद्वांसो जानन्त्येव । भिक्षुशिष्यो भावागणेशः क्वचिद् भिक्षुमतौचित्यं प्रदर्शयामास; तथैव क्वचिदेव नागेशभट्टो भिक्षुमतमुपपादयितुं प्रायतत । भिक्षुमतानां समीक्षणं मया ग्रन्थान्तरे विधास्यते—इति निवेद्य विरमामि ।

रामशंकरो भट्टाचार्यः

—:: ** ::—

विज्ञानभिक्षुविरचित:

# साङ्ख्यसार:

## पूर्वभाग:

### प्रथम: परिच्छेद:

महदाख्य: स्वयम्भूर्यो जगदङ्कुर ईश्वर: ।
सर्वात्मने नमस्तस्मै विष्णवे सर्वजिष्णवे ॥ १ ॥
साङ्ख्यकारिकया लेशादात्मतत्त्वं विवेचितम् ।
साङ्ख्यसारविवेकोऽतो विज्ञानेन प्रपञ्च्यते ॥ २ ॥
प्राय: सङ्कलिता साङ्ख्य-प्रक्रिया कारिकागणे ।
साऽतोऽत्र वर्ण्यते लेशात् तदनुक्तांशमात्रत: ॥ ३ ॥
साङ्ख्यभाष्ये प्रकृत्यादे: स्वरूपं विस्तरान्मया ।
प्रोक्तं तस्मात् तदप्यत्र संक्षेपादेव वक्ष्यते ॥ ४ ॥

आत्मानात्मविवेकसाक्षात्कारात् कर्तृत्वाद्यखिलाभिमाननिवृत्त्या तत्कार्यराग-द्वेषधर्माधर्माद्यनुत्पादात् पूर्वोत्पन्नकर्मणां चाऽविद्यारागादिसहकार्युच्छेदरूपदाहेन विपाकानारम्भकत्वाद् प्रारब्धसमाप्त्यनन्तरं पुनर्जन्माभावेन त्रिविधदु:खात्यन्त-निवृत्तिरूपो मोक्षो भवतीति श्रुतिस्मृतिडिण्डिम: ।

तत्र श्रुतय:—"अथाकामयमानो योऽकामो निष्कामो न तस्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते ( बृहदा० ४।४।६ )[1]

---

१. निष्काम इत्यस्मादनन्तरम् 'आप्तकाम आत्मकाम:' इति पठ्यते श्रुतौ । उत्क्रामन्ति इत्यस्मादनन्तरम् 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतौ पठ्यते । नृसिंहोत्तरतापिण्यां तु "सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते" इति पठ्यते । उद्धृते श्रुतिपाठे वचनद्वयसांकर्यमस्तीति प्रतिभाति ।

[२]आत्मानं चेद् विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् ॥ ( बृहदा० ४।४।१२ )
[३]यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ ( कठ० २।३।१४ )
[४]कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥
( मुण्डक० ३।२।२ )

इत्याद्याः ।

स्मृतयश्च कौर्माद्याः । यथा कौर्मे—

[५]रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ।
कार्यो ह्यस्य भवेद् दोषः पुण्यापुण्यमिति श्रुतिः ॥
तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः । इति ॥
( २ । २ । २१–२२ ) ।

---

२. कस्य कामाय = कस्य वान्यस्य आत्मनो व्यतिरिक्तस्य कामाय प्रयोजनाय ( शां० भाष्य ); शरीरमनुसंज्वरेत् = भ्रंशेत्, शरीरोपाधिकृतदुःखमनु दुःखी स्यात् शरीरतापमनुतप्येत ( भाष्य )। अत्रार्थे भागवतमपि—आत्मानं चेद् विजानीयात् परं ज्ञानधुताशयः। किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ( ७।१५।४० ) ।

३. "हृदि बुद्धौ श्रिता आश्रिताः; बुद्धिर्हि कामानामाश्रयो नात्मा ।······इहैव प्रदीपनिर्वाणवत् सर्वबन्धनोपशमाद् ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः" ( भाष्य ); बृहदा० ४।४।७ द्र० ।

४. कर्मभिरित्यपपाठः । "आत्मकामत्वेन परि समन्तत आप्ता कामा यस्य तस्य पर्याप्तकामस्य" (भाष्य) ।

५. 'कर्मण्यस्य महान् दोषः' 'इति स्थितिः' इति च मुद्रितपुराणपाठौ । 'भवेद् दोषः' इति क्वचित् पुराणकोशेषु पठ्यते ।

मोक्षधर्मे च—

[६]"इन्द्रियाणीन्द्रियार्थाश्च नोपसर्पन्त्यतर्षुलम् ।
हीनश्च करणैर्देही न देहं पुनरर्हति ॥"
( शान्ति० २१३ । २१ ) ।
"तस्मात् तर्षात्मकाद् रागाद् बीजाज् जायन्ति जन्तवः" ॥ इति ॥

ननु रागाभावेऽपि केवलकर्मवशाद् नरकादिप्राप्तेः कथं रागस्य कर्मसहकारित्वं विपाकारम्भे उपपन्नम्, नरकादौ विशेषतो रागाभावेऽपि सामान्यतो रागसत्त्वात्, निषिद्धस्त्र्यादिगामिनां स्त्र्यादिरागादेव तप्तलोहमयनारीसमालिङ्गनादिरूपनरकोत्पत्तेः ।

यद्यप्यविद्याऽस्मितारागद्वेषभयाख्यं क्लेशपञ्चकमेव जन्मादिविपाकारम्भे कर्मणां सहकारि भवति—"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य[७]" ( बृहदा० ४।४।६ ) इति श्रुतावभिमानरागद्वेषादिजन्यस्य विषयवासनाख्यसङ्गसामान्यस्यैव जन्मादिविपाकारम्भे कर्मसहकारित्वसिद्धेः ।

"यत्र यत्र मनो देही धारयेत् सकलं धिया ।
स्नेहाद् द्वेषाद् भयाद् वापि याति तत्तत्स्वरूपताम् ॥"

इत्यादिस्मृतेश्च । तथा च—"क्लेशमूलः कर्माशयः", "सति मूले तद्विपाको जात्यायुर्भोगाः" इति ( २।१२–१३ ) योगसूत्राभ्यामप्यदृष्टे तद्विपाकारम्भे च क्लेशानां हेतुत्ववचनाच्च; तथाऽप्यविद्याऽस्मितासत्त्वे रागस्याऽऽवश्यकत्वाद् द्वेषभययोश्च रागमूलकत्वाद् राग एव मुख्यतो जन्मादिहेतुतया यथोक्तवाक्यैर्निर्दिश्यत इति ।

---

६. भारते मुद्रितपाठस्त्वयम्—ज्ञानेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्ति ⋯ रर्हति इति ; तस्मादित्यादिकं वाक्यं नात्र पठ्यते । अतर्षुलम्=तृष्णाशून्यम् । तर्षात्मकात्=तृष्णात्मकात् । जायन्तीत्यत्र छान्दसं परस्मैपदम् ।

७. अस्य लिङ्गं मनः यत्र निषक्तं तद् एव सक्तः ( सन् ) कर्मणा सह एति – इत्यन्वयः ( श्लोकार्थविषये भाष्यं द्रष्टव्यम् ) । मनः प्रधानत्वान्मनो लिङ्गम् इत्युच्यते ( भाष्य ) ।

ननु "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे [8]परावरे ( मुण्डक० २।२।८ ) इत्यादिश्रुतेर्ज्ञानस्य प्राचीनकर्मनाशकत्वमेवोचितम्, दाहकत्वं कथमिष्यते इति चेत्, न; "ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः" ( गीता ४।१९ ) इत्यादिवाक्यैर्दाहस्यापि श्रवणेन लाघवाद् दाहपरत्वस्यैव नाशादिवाक्येष्वपि कल्पनौचित्यात् । कर्मणां दाहश्च क्लेशादिसहकार्युच्छेदेन नैष्फल्यम् । कर्मणां नाशस्तु प्रारब्धभोगान्ते चित्तनाशादेव भविष्यति, अतो लोकसिद्धेनाविद्यानाशेनैव द्वारेण कर्मफलानुत्पत्तिसम्भवाद् न ज्ञानस्य कर्मनाशकत्वं गौरवादित्यादिकं योगवार्त्तिके ( १।१, २।१३ ) प्रपञ्चितमस्माभिरिति दिक् ।

तस्माद् विवेकसाक्षात्कारादविद्याऽस्मितारागादिक्लेशनिवृत्तौ त्रिविधदुःखात्यन्तनिवृत्तिरूपपरमपुरुषार्थः सिध्यतीत्युपपन्नम् । तथा च योगसूत्रद्वयम्—"हेयं दुःखमनागतम्" ( २।१६ ), "विवेकख्यातिरविप्लवा हानोपायः" ( २।२६ ) इति ।

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारेऽभ्यर्हितत्वादादौ विवेकख्यातिफलस्य परमपुरुषार्थस्य परिच्छेदः ।

---

## द्वितीयः परिच्छेदः

अथाऽऽत्मानात्मविवेकज्ञानस्य किं स्वरूपं तदुच्यते—आत्मा तावत् सुखदुःखाद्यनुभवितेति सामान्यतो लोकप्रसिद्धिः; अनात्मा च प्रकृत्यादिर्जड़वर्गः; तयोरन्योऽन्यवैधर्म्येण परिणामित्वापरिणामित्वादिरूपेण दोषगुणात्मकेन हेयोपादेयतया पृथक्त्वेन ज्ञानं विवेकज्ञानम् । तथा च श्रुतिः—"स[1] एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति" ( बृहदा० ३।९।२६ ) इत्यादिः । स्मृतिश्च—

८. परं च कारणात्मना अवरं च कार्यात्मना तस्मिन् परावरे" ( भाष्य )।

१. "स एषः—स यो नेति नेतीति निर्दिष्टो मधुकाण्डे एष सः । असितः=अबद्धः न रिष्यति = ग्रहणविशरणसम्बन्धकार्यधर्मरहितत्वान्न रिष्यति न हिंसामापद्यते न विनश्यतीत्यर्थः" ( भाष्य )।

"सोऽथ प्रतिनिवृत्ताद्यो गुरुदर्पणबोधितः ।
स्वतोऽन्यां विक्रियां मौढ्यादास्थितामन्वसैच्चत ॥
अथासौ प्रकृतिर्नाहमियं हि कलुषात्मिका ।
शुद्धबुद्धस्वभावोऽहमिति त्यजति तां विदन् ॥
एवं देहेन्द्रियादिभ्यः शुद्धत्वेनाऽऽत्मनि स्मृते ।
निखिला सविकारेयं त्यक्तप्रायाऽहिचर्मवत् ॥" इति ।

सूत्रञ्च—"तत्त्वाभ्यासान्नेति नेतीति त्यागाद् विवेकसिद्धिः" ( सां० सू० ३।७५ ) इति । तत्त्वज्ञानस्य लक्षणञ्च मात्स्ये ( १४५।५५ ) कृतम्—

"अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते ।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते[२] ॥ इति ।

यद्यप्यन्योऽन्यभेदज्ञानमेव विवेकज्ञानं तथाऽप्यात्मविशेष्यकमेव[३] तन्मोक्षकारणं भवति, "आत्मा[४] वा अरे द्रष्टव्यः" ( बृहदा० ४।५।६, २।४।४ ) इत्यादिश्रुतिस्मृतिभ्यः ।

नन्वनात्मन्यात्मबुद्धिरूपा याऽविद्या पातञ्जलादिप्रूक्ता ( २।५ ) तस्याः कथमात्मविशेष्यकविवेकज्ञाननाश्यत्वं प्रकारादिभेदाद्[५] इति चेत्, न; तादृशा-

---

२. मुद्रितपाठस्तु—अव्यक्तादिविशेषान्तविकारेऽस्मिन् निवर्तते । चेतनाचेतनं ज्ञात्वा ज्ञाने ज्ञानी स उच्यते ॥ इति । पाठान्तराण्यपि उपलभ्यन्ते । आग्नेय० ३७६।३ क—४ ख इत्यत्र पठ्यते—अव्यक्तादौ विशेषान्ते विकारोऽस्मिन् निवर्तते । चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥ अत्र विशेषपदेन 'षोडश विकाराः' ( पञ्चभूतानि एकादश इन्द्रियाणि च ) एव ग्राह्याः । अस्मिन्नर्थे शब्दोऽयं योगसूत्रे ( २।१९ ) प्रयुक्तः ।

३. आत्मविशेष्यकम् = आत्मा प्रकृत्यादिभ्यो भिन्न इति ज्ञानम् । यदि अनात्मविशेष्यकं ज्ञानं स्यात् तर्हि तत् 'प्रकृत्यादय आत्मभिन्नाः' इत्याकारकं स्यात् ।

४. अत्र 'वाऽरे' इति पाठोऽसाधुः ।

५. प्रकारादिभेदात्—समानप्रकारकभावाभावबुद्ध्योरेव विरोधो भवति इत्यभ्युपगम्यते । भिन्नप्रकारकयोस्तयोः प्रतिबध्यप्रतिबन्धकभावो नास्ति—इति प्रसिद्धमेव ।

विद्याया अनात्मविशेष्यकविवेकज्ञानद्वारेणाऽत्मविशेष्यकविवेकज्ञाननाश्यत्वादिति[६]।

यच्च योगेन निर्विकल्पकमात्मज्ञानं जायते, तद् विवेकज्ञानद्वारैव मोक्षकारणं भवति न तु साक्षात्, अविद्यानिवर्त्तकत्वाभावात्। 'अहं गौरः कर्त्ता सुखी दुःखी' इत्यादिज्ञानमेव ह्यविद्या संसारानर्थहेतुतया श्रुतिस्मृतिन्यायसिद्धा, तस्याश्च निवर्त्तिका 'नाहं गौरः' इत्यादिरूपा विवेकख्यातिरेव भवति। समाने विषये ग्राह्याभावत्वप्रकारकग्राह्याभावज्ञानत्वेनैव विरोधात्[७], अन्यथा शुक्तिनिर्विकल्पकस्यापि 'इदं रजतम्' इति ज्ञानविरोधित्वापत्तेः[८]।

किञ्च [९]यथोक्ताभावज्ञाने ग्राह्यज्ञानविरोधित्वस्याऽवश्यकतया निर्विकल्पकज्ञानस्य भ्रमनिवर्त्तकत्वं न पृथक् कल्प्यते गौरवात्। अपि च "अथात आदेशो

---

६. अनात्मविशेष्यकविवेकज्ञानद्वारेण—"आत्मविशेष्यक-अनात्मप्रतियोगिक - भेदप्रकारकज्ञानेन तुल्यवित्तिवेद्यतया अनात्मविशेष्यकम् अनात्मप्रतियोगिक - भेदप्रकारकं ज्ञानं जन्यते तेनैव च साक्षात् समानप्रकारकतया तादृशाविद्या निवर्त्यते। प्रकृते आत्मविशेष्यकतत्त्वज्ञानं तु तद् द्वारा अविद्यानाशे प्रयोजकमिति भावः" (प्रभा)।

७. समाने विषये—विषयः = विशेष्यम्। इदम् उदाहरणेन स्वच्छीकृतं प्रभायाम् - "आत्मत्वावच्छिन्नविशेष्यक-गौरत्वादिप्रकारकज्ञानं प्रति आत्मत्वावच्छिन्नविशेष्यक - गौरप्रतियोगिक - भेदत्वावच्छिन्नप्रकारक - निश्चयस्यैव विरोधित्वेन क्लृप्तेन 'अहं गौरः' इति ज्ञाने 'नाहं गौरः' इति निश्चय एव प्रतिबन्धकतया निरुक्तः···इदं च प्रागुक्तं आत्मविशेष्यकज्ञानस्य अनात्मविशेष्यकज्ञानद्वारा अविद्यानिवर्तकत्वमपि समर्थयते।"

८. शुक्तिनिर्विकल्पस्य = प्रकारता-विशेष्यता-शून्यस्य शुक्तिज्ञानस्य। वस्तुतः 'इदं न रजतम्' इसि निश्चय एव 'इदं रजतम' इत्यस्य विरोधीति विज्ञेयम्। शुक्तिनिर्विकल्पज्ञानं न विरोधि भवितु मर्हति।

९. "आत्मनि गौरदेहभेदज्ञाने गौरदेहाभेदज्ञानविरोधस्य अवश्यकल्पनीयतया केवलात्मस्वरूपज्ञानस्य मिथ्याज्ञानविरोधित्वं न कारणतया स्वीक्रियते, अननुगतानेककारणकल्पने गुरुत्वदोषापातात्" (विवेक०)।

नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति'' ( बृहदा० २।३।६ ) इत्यादि-श्रुत्या विवेकोपदेशापेक्षयोत्तमोपदेशो नास्तीत्युच्यते । ''क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा । भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥'' ( गीता १३।३४ ) इति गीतादिवाक्यैश्च विवेकज्ञानस्यैव मोक्षहेतुत्वम् उच्यते । अतो विवेकज्ञानमेव साक्षादविद्यानिवृत्त्या मोक्षहेतुः ।

योगेन केवलात्मसाक्षात्कारस्तु योग्यानुपलब्धिविषयोपाध्यादिगतधर्माभावमु-पाध्यादिभेदञ्च[10] ग्राहयति, ततोऽविद्यानिवृत्तिरिति ।

एतेन सर्वभूतेषु समताज्ञानमात्मनः सर्वात्मकत्वादिज्ञानञ्च श्रुतिस्मृत्योर्गीयमानं विवेकज्ञानस्यैव शेषभूतं[11] सर्वदर्शनेषु मन्तव्यम्; ज्ञानान्तराणां साक्षादभिमाना-निवर्तकत्वात् । ब्रह्ममीमांसायां त्वयं विशेषो यत् परमात्मविवेकशेषत्वम्;[12] साङ्ख्यशास्त्रे तु सामान्यात्मविवेकशेषत्वमिति[13] दिक् ।

ननु यथोक्तविवेकख्यातितोऽप्यत्यन्तमविद्योच्छेदो न घटते, विवेकख्यातेरविद्या-प्रतिबन्धकत्वमात्रत्वेन विवेकख्यातिनाशोत्तरं पुनरभिमानसम्भवात्, शुक्तिरजत-विवेकदर्शिनोऽपि कालान्तरे शुक्तौ रजतभ्रमवदिति, मैवम्; दृष्टान्तवैषम्यात्; शुक्त्यादिषु जातेऽपि साक्षात्कारे दूरत्वादिरूपविषयदोषाणां पाटलादिरूपकरण-दोषाणाञ्चोत्पत्तिसम्भवेन पुनर्भ्रमो युक्तः । अनात्मन्यात्माभिमाने त्वनादिवासनैव[14] दोषः सर्वास्तिकसम्मतः, जातमात्रस्याभिमाने दोषान्तरानुपलब्धेः ।

सा मिथ्याज्ञानवासना यदा विवेकख्यातिपरम्पराजन्यदृढवासनोन्मूलिता

---

१०. योग्यस्य प्रत्यक्षयोग्यस्य प्रतियोगिनः अनुपलब्धिः = योग्यानुपलब्धिः ।

११. शेषभूतम् = अङ्गभूतम् ।

१२. परमात्मविवेकशेषत्वम् = परमात्मविवेकज्ञानाङ्गत्वम् ।

१३. सामान्यात्मविवेकशेषत्वम् = सामान्यः = साधारणः; विवेकः = भेदः । शेषत्वम् = अङ्गत्वम् ।

१४. वासना = विपर्ययज्ञानवासना । वासना = संस्कारविशेषः । 'ये संस्काराः स्मृतिहेतवस्ते वासनाः' ( व्यासभाष्य २।१३ ) ।

तदैव विवेकसाक्षात्कारनिष्ठोच्यते । तत्पूर्वमवश्यं वासनालेशतो मिथ्यांशस्य कस्याप्यात्मनि भावात् तस्याश्च विवेकख्यातिनिष्ठायां जातायां न पुनरभिमानः[१५] सम्भवति वासनाख्यदोषाभावादिति तु महद् वैषम्यम् ।

यदि तु बुद्धिपुरुषयोरन्योऽन्यप्रतिबिम्बनादिकमविवेककारणं[१६] दोष इष्यते, तदा तु तद्दोषं बाधित्वैव विवेकसाक्षात्कार उदित इति न तस्य पुनर्भ्रमहेतुत्वं फलबलेन योगजधर्मासहकृतस्यैव तस्य दोषत्वकल्पनासम्भवादिति ।

विवेकख्यातिनिष्ठा च गीतादिषु लक्षिता

"प्रकाशश्च प्रवृत्तिश्च मोहमेव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥" इति ।

( १४।२२–२३ ) ।

गुणातीतो निवृत्तिगुणाभिमानः । अधिकन्तु ज्ञानिलक्षणमग्रे ( द्र० परि० ७ ) वक्ष्यामः ।

नन्वेवमपि विवेकप्रतियोगिपदार्थनामानन्त्येन[१७] प्रातिस्विकरूपैः सर्वपदार्थेभ्यो विवेकग्रहासम्भवात् कथं विवेकख्यातेर्मोक्षहेतुत्वम् इति चेत्, न; दृश्यत्वपरिणामित्वादिसामान्यरूपैर्विवेकग्रहसम्भवात्[१८] ।

तथाहि—द्रष्टा स्वसाक्षात्प्रकाश्येभ्यो भिन्नः प्रकाशकत्वात्, यो यस्य प्रकाशकः स तस्माद् भिन्नः, यथा घटादालोको वृत्तिप्रकाश्याच्च वृत्तिरित्यनुमानेनाऽऽदावन्तर्दृश्येभ्यो बुद्धिवृत्तितदारूढार्थेभ्यो विवेकतो बुद्धिसाक्षी सिध्यति । कर्मकर्तृ-

---

१५. अभिमानम् = मिथ्याज्ञानम् । मिथ्यांशस्य = बाधितमिथ्याज्ञानस्य ।

१६. बुद्धौ पुरुषप्रतिबिम्बं बह्वाचार्यसंमतम् । पुरुषे बुद्धिवृत्तीनां प्रतिबिम्बं भवतीति भिक्षुराह ( द्र० योगवा० १।४, १।७, २।२० ) ।

१७. विवेकप्रतियोगिपदार्थानामानन्त्येन—'भेदज्ञाने प्रतियोगिज्ञानं कारणं भवति । अत्र प्रकृत्यादिभेदप्रतियोगि-भूताः पदार्था असंख्येयाः' इति भावः ।

१८. सर्वदृश्यानुगतधर्मेण सर्वपरिणाम्यनुगतधर्मेण च प्रतियोगिनां ग्रहः सम्भवत्येवेत्यर्थः ।

विरोधश्चानुकूलस्तर्कः[१९] । अत्र आत्मनि व्यभिचारवारणाय साक्षात्पदम्, वृत्तिद्वारैवाऽऽत्मनः स्वविषयत्वात्[२०] ।

नन्वत्रानुमाने बुद्धिवृत्तिमात्राद् विवेकः सिध्यतु, तस्या एव साक्षादात्मदृश्यत्वाद्, न प्रकृत्यादिभ्य इति चेत्, न; वृत्तीनामज्ञातसत्त्वाभावेन ह्यत्रानुमाने लाघवाद् वक्ष्यमाणतर्कगणाच्चाखिलवृत्तीनां द्रष्टा विभुकूटस्थनित्यैकज्ञानस्वरूपतयैव सिध्यति । यथा नैयायिकानां 'क्षितिः सकर्तृका कार्यत्वादि'त्यनुमाने लाघवात् कर्त्तुरेकत्वनित्यत्वादिकं[२१] तद्वत् । तत्र विभुत्वं परिच्छिन्नभिन्नत्वं कूटस्थत्वादिकत्वञ्च परिणामिभिन्नत्वादिकमतो बुद्ध्यात्मनोर्दृग्दृश्यरूपतो विवेकग्रहे सति तदुत्तरानुमानेन परिणामित्वापरिणामित्वादिरूपैः सामान्यतो[२२]ऽप्यात्मानात्मविवेकग्रहो घटत इति ।

अत एव पातञ्जले सत्त्वपुरुषान्यताख्यातिरेव मोक्षहेतुतया स्थले स्थले व्यासभाष्ये प्रोक्ता[२३] । सत्त्वपुरुषान्यताख्यातिरूपदृग्दृश्यविवेकग्रहोत्तरं यथोक्तरीत्या प्रकृत्यादिविवेकग्रहात् । तत्र च सत्त्वशब्देन बुद्धिस्थत्वेन बुद्धिसत्त्वमुक्तमिति ।

---

१९. अनुकूलस्तर्कः—आत्मा प्रकाशकः, बुद्ध्यादयः प्रकाश्याः । यदीमौ द्वौ पदार्थौ न भिन्नौ स्यातां तर्हि प्रकाश्य-प्रकाशक-भावो न घटेतेत्यर्थः ।

२०. स्वविषयत्वात् = आत्मप्रकाश्यत्वात् ।

२१. जगत्कर्तुरीश्वरस्य नित्यत्वैकत्वविषये द्र० न्यायसू० ४।१।२१, वार्तिकं च ।

२२. प्रकृत्यादिसकलाचेतनवृत्तिधर्मपुरस्कारेणेत्यर्थः ।

२३. द्र० तदेव ( चित्तमेव ) रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति ( व्यासभाष्य १।२ ); यदा निर्धुतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रत्ययमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति···एतस्यामवस्थायां कैवल्यं भवति ( भाष्य ३।५५ ); सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः···सा विवेकख्यातिरविप्लवा हानस्योपायः···इत्येष मोक्षस्य मार्गो हानस्योपायः ( भाष्य २।२६ ); अत्रार्थे 'सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च, तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्' इति योगसूत्रे द्रष्टव्ये ( ३।४९–५० ) ।

एवञ्च प्रकृत्यादिपदार्थानां विशिष्य ज्ञानाभावेऽपि तद्विवेकज्ञानं घटते । एतेन दृग्दृश्यविवेकादविद्यानिवृत्तिरिति प्राचां प्रवादोऽप्युपपादित: ।

किञ्चाऽऽत्मा प्रकृतितत्कार्येभ्यो भिन्नोऽपरिणामित्वादित्याद्यनुमानैरपि सामान्यतो दृश्यविवेको द्रष्टरि सम्भवतीति ।

यत्तु आधुनिका वेदान्तिन्रुवा दृश्यत्वेनैव प्रकृत्यादीनां द्रष्टृत्वेन च प्रकृत्याद्यखिलजड़ेभ्य आत्मविवेकं मन्यन्ते, "घटद्रष्टा घटाद्भिन्न: सर्वथा न घटो यथा । देहद्रष्टा तथा देहो नाहमित्यादिरूपत: ।।"

तन्न; "आत्मा वा अरे द्रष्टव्य:" ( बृहदा० ४।५।६ ) इत्यादिश्रुतिभिरात्मनोऽपि दृश्यत्वात्; साक्षाद् दृश्यत्वविवक्षया च प्रकृत्यादेरसंग्रहात् करणद्वारैव तद्दर्शनात् ।

अथैवं कल्पनीयम् आत्मनो वृत्तिव्याप्यत्वमेव[२४] दृश्यत्वं श्रुत्यादिभिर्विधीयते, न तु प्रकाश्यत्वरूपफलव्याप्यत्वं[२५] स्वयम्प्रकाशस्वरूपस्य प्रकाशापेक्षाविरहात्; अतोऽत्र दृश्यत्वं प्रकाश्यत्वम्, तच्चात्मनि नास्तीति; तदपि तुच्छम् । यथा ह्यहमित्यनुभूयमानोऽप्यात्मा चैतन्याख्यफलव्याप्यो न भवतीति भवद्भिरुच्यते तथैव बौद्धैरपीष्यते, सुखदु:खादिमत्त्वेनापि बुद्धि: स्वप्रकाशतया चैतन्यव्याप्या न भवतीति । तथा चात्मनीव बुद्धावपि दृश्यत्वासिद्ध्या दृश्यत्वेन रूपेण बुद्धिविवेकोऽत्यन्तापेक्षितोऽपि न सिध्यतीति; भाष्यादिषु ( द्र० पाद ४ ) चान्यान्यत्र च दूषणान्युक्तानीति दिक् ।

---

२४. वृत्तिव्याप्यत्वम्=आत्माकारेण आकारितं यद् अन्त:करणं तस्य वृत्तेर्विषयत्वम् । आत्मनो दृश्यत्वं खलु ईदृशमेवाभ्युपगम्यते । दृश्यत्वं यदि प्रकाश्यत्वरूपं फलव्याप्यत्वं भवेत् तर्हि तन्नात्मनि भवेत् ।

२५. फलव्याप्यत्व-वृत्तिव्याप्यत्वविषये इदं विज्ञेयम्—यद् बुद्धिवृत्तौ प्रतिबिम्बितं भवति तत् फल मित्युच्यते । तच्च चिदाभास इत्येव । चिदाभासस्य विषय: प्रत्यगात्मा—इति मतं निषिद्धं पूर्वाचार्यै:, यतोऽयं प्रत्यगात्मन एव स्फुरणम् । आत्मब्रह्मैक्यविषयकं यदज्ञानं तस्य निवृत्तये 'अहं ब्रह्म' इति बुद्धिवृत्तिव्याप्तेरपेक्षास्ति । एतद्विषये पञ्चदशी ( ७।९०-९२ ) द्रष्टव्या ।

ननु सम्भवत्वेवं सामान्यरूपेण विवेकग्रहः, तथापि सामान्यान्येव बहूनि सन्ति परिणामित्व - संहत्यकारित्व-सुखदुःखमोहात्मकत्व-चतुर्विंशतितत्त्वत्वादीन्यतः तैस्तै रूपैर्विवेकग्रहाणां मोक्षहेतुत्वेऽननुगमदोष इति चेत्, न; अभिमानप्रतिबन्धक-ज्ञानत्वेनैवानुगमादिति ।

अथैवं सामान्यरूपेण[२६] विवेकस्यैव सर्वाभिमाननिवर्त्तकतया 'नाहं देहो नेन्द्रियाणी'त्यादिप्रत्येकरूपैर्विवेकग्रहाणां मोक्षहेतुत्वं श्रुतिस्मृत्योरुच्यमानं कथं घटेतेति चेत्, न; अवान्तरविवेकानां सामान्यविवेकप्रपञ्चमात्रत्वादिति ।

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे मोक्षहेतुविवेकज्ञानस्य स्वरूपस्य परिच्छेदः ।

—: ** : —

## तृतीयः परिच्छेदः

अथ के ते प्रकृत्यादयो येभ्यः पुरुषो विवेचनीय इत्युच्यते—

"प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम् ।
भूतानि चेति सामान्याच्[१] चतुर्विंशतिरेव[२] ते ॥"

एतेष्वेव धर्मधर्म्यभेदेन गुणकर्मसामान्यानामन्तर्भावः । तत्र प्रकृतित्वं साक्षाव परम्परया वाऽखिलविकारोपादानत्वम्—प्रकृष्टा कृतिः परिणामरूपा अस्या इति

---

२६. सामान्यरूपेण = परिणामित्वापरिणामित्वरूपेण ।

१. सामान्यात्=सामान्यरूपेण । विशेषविवक्षा यदि स्यात् तर्हि अतात्त्विकानां वस्तूनां ब्रह्माण्डादीनामपि प्रतिपादनं स्यादेव ।

२, उक्तं च भारते-एषा तत्त्वचतुर्विंशा सर्वाकृतिषु वर्तते (शान्ति० ३०२।२९) । चतुर्विंशतितत्त्वगणना बहुत्रोपलभ्यते—स्कन्द० प्रभास० वस्त्रापथ १८।१३-१६; मान्त्रिकोपनिषदि 'चतुर्विंशतिसंख्याकमव्यक्तं व्यक्तमुच्यते' इत्युक्तम् । शारीरकोपनिषदि च—त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि च । चतुर्विंशतिरव्यक्तं प्रधानम्—इत्युक्तम् । त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि च । चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् ( कूर्म० २ । ७ । २४-२५ ) इति च ।

व्युत्पत्तेः । प्रकृतिः शक्तिरजा प्रधानमव्यक्तं तमो[3] मायाऽविद्येत्यादयः [4]प्रकृतेः पर्यायाः[5] ।

"ब्राह्मीति विद्याऽविद्येति मायेति च तथा परे ।
प्रकृतिश्च परा चेति वदन्ति परमर्षयः ॥" इति स्मृतेः ।

सा च साम्यावस्थयोपलक्षितं[6] सत्त्वादिद्रव्यत्रयम् । कार्यसत्त्वादिवारणायोपलक्षितान्तम् । साम्यावस्था च न्यूनाधिकभावेनासंहननावस्था, अकार्यावस्थेति यावत् । महदादिकन्तु कार्य्यसत्त्वादिकं न कदाऽप्यकार्यावस्थं भवतीति तद्व्या-

३. आह दुर्गः – सांख्यास्तु तमःशब्देन प्रधानमुपादानमुच्यमानमिच्छन्ति । ते हि पारमर्षं सूत्रमधीयते—तम एव खलु इदमग्र आसीत् तस्मिन् तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत ( निरुक्त ७।३ ); आह स्कन्दस्वामी—तमश्चास्मिन् पक्षे प्रकृत्यव्यक्तादिपर्यायं प्रधानमुच्यते ।

४. 'प्रकरोतीति' प्रकृतिपदस्य व्युत्पत्तिर्दर्शिता । क्तिच् क्तौ च संज्ञायामिति कृत्रः संज्ञायां क्तिच् ( शान्ति० ३१३।१५ नीलकण्ठकृत टीका ) । ब्रह्मेति पदमपि प्रकृतिपर्यायरूपेण प्रयुज्यते—"गुहेति प्रकृतिनाम; 'यत् तत् स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृतिः प्रसूतिः । आत्मा गुहा योनिरनाद्यनन्तं क्षेत्रं तथैवामृतमक्षरं चे'ति पुराणे दर्शनात्" ( आप० ध० सू० १।८।२२।४ उज्ज्वलाटीका ) ।

५. अत्रेमानि वचांसि द्रष्टव्यानि—गुणसाम्यलक्षणमव्यक्तं प्रधानं प्रकृतिर्विधानम् इत्यनर्थान्तरम् ( देवलवचनम् ), प्रकृतिर्गौः प्रकीर्तिता ( वायु० २३।५५ ): अलिङ्गां प्रकृतिं त्वाहुः ( शान्ति० ३०३।४७ ); तमोऽव्यक्तं शिवं धाम रजो योनिः सनातनः ...ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ॥ ( अश्व० ३९।२३-२४ ) ।

६. अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरिति मतं सांख्यभाष्ये ( १।६१ ) प्रपञ्चितम् । विशेषणता–उपलक्षणताभेदेन प्रकारता द्विविधा । तत्र विद्यमानं व्यावर्तकं सद् विशेषणम्; अविद्यमानमपि व्यावर्तकं सद् उपलक्षणम् ( न्यायसिद्धान्तमञ्जर्याः यादवाचार्यकृत टीका, पृ० २० ) ।

वृत्तिः। वैषम्यावस्थायामपि प्रकृतित्वसिद्धये उपलक्षितमित्युक्तम्। अकार्यमिति तूपलक्षितान्तस्य निष्कृष्टार्थः।

सत्त्वादिगुणवती सत्त्वाद्यतिरिक्ता प्रकृतिरिति न शङ्कनीयम्; "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" इति साङ्ख्यसूत्रेण (६।३९) सत्त्वादीनां प्रकृतिस्वरूपत्वहेतुना प्रकृतिधर्मत्वप्रतिषेधात्, योगसूत्र-तद्भाष्याभ्यामपि (२।१८) गुणानामेव प्रकृतित्ववचनाच्च। गुणेभ्य एव कार्योत्पत्तौ तदन्यप्रकृतिकल्पनावैयर्थ्याच्च।

प्रकृतेर्गुणा इत्यादिवाक्यन्तु वनस्य वृक्षा इतिवत् बोध्यम्। "सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः" (भागवत ११।२४।५) इति सत्त्वादीनां प्रकृतिकार्य्यत्ववचनन्तु गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्यसत्त्वादिपरमेव। महदादिसृष्टिर्हि गुणवैषम्याच् श्रूयते। तच्च वैषम्यं सजातीयसंवलनेन गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः सत्त्वादिव्यवहारयोग्यः परिणाम इति। एतेनाष्टाविंशतितत्त्वपक्षोऽप्युपपादितो मन्तव्यः[७]।

वैषम्ये एव सत्त्वादिव्यवहारश्च श्रुतौ दृश्यते; यथा "तम एवेदमग्र आसीदेकं तत्परेणेरितं विषमत्वं प्रयात्येतद् वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद् वै सत्त्वस्य रूपम्" (मैत्रायण्यारण्यक ५।२) इति।

सत्त्वादित्रयञ्च सुखप्रकाशलाघवप्रसादादिगुणवत्तया संयोगविभागादिमत्तयाऽनाश्रितत्वोपादानत्वादिना च द्रव्यत्वेऽपि[८] पुरुषोपकरणत्वात् पुरुषबन्धकत्वाच्च

---

७. कार्यसत्त्वं, कार्यरजः, कार्यतमः इति त्रयः पदार्थाः; पञ्चविंशतिश्च प्रसिद्धाः— इति मिलित्वा अष्टाविंशतिः पदार्थाः। "कार्यसत्त्वादीनां त्रयाणां प्रत्येकं गुणत्रयात्मकत्वेऽपि सत्त्वादीनाम् एकैकप्राधान्यकृतस्तथा तथा व्यवहार इति बोध्यम्" (प्रभा)।

८. द्र० व्यासभाष्यभास्वतीटीका—"एते सत्त्वादयो गुणाः पुरुषस्य बन्धनरज्जव इत्यर्थः। सत्त्वादीनि द्रव्याणि, न तानि द्रव्याश्रया गुणाः, तेभ्यो व्यतिरिक्तस्य गुणिनोऽभावादिति वेदितव्यम्" (२।१८)।

गुणशब्देनोच्यते, इन्द्रियादिवत्। गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु[९] धर्म-धर्म्यभेदात्, मनसः संकल्पात्मकत्वत्।

तत्र सत्त्वं सुखप्रसादप्रकाशाद्यनेकधर्मकं प्राधान्यतस्तु सुखात्मकमुच्यते। एवं रजोऽपि दुःखकालुष्यप्रवृत्त्याद्यनेकधर्मकं प्राधान्यतस्तु दुःखात्मकमुच्यते। तथा तमोऽपि मोहावरणस्तम्भनाद्यनेकधर्मकं प्राधान्यतस्तु मोहात्मकमुच्यते। त एव धर्मास्तेषां लक्षणानि भवन्ति।

सत्त्वादिसंज्ञा चान्वर्था[१०], सतो भावः सत्त्वमुत्तमत्वमिति व्युत्पत्त्या हि धर्मप्राधान्येनोत्तम पुरुषोपकरणं सत्त्वशब्दार्थः। मध्यमञ्च रजःशब्दार्थो राग-योगात्। अधमञ्च तमःशब्दार्थः, अधर्मावरणयोगात्। तानि च सत्त्वादीनि प्रत्येक-मसङ्ख्यव्यक्तयः, "लघुत्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यञ्च गुणानाम् (१।१२८) इति साङ्ख्यसूत्रात्। अत्र हि सूत्रे लघुत्वादिना बहूनां सत्त्वानां साधर्म्यं तेनैव रजस्तमोभ्यां वैधर्म्यम्। एवं चलत्वादिना गुरुत्वादिना च बहूनां रजसां बहूनाञ्च तमसां तदुभयमुक्तमिति।

किञ्च यदि सत्त्वादित्रयमेकैकव्यक्तिरेव स्यात् तत् त्रयं विभ्वेव वक्तव्यम्, एकदाऽनेकब्रह्माण्डादिसृष्टिश्रवणात्[११]; तथा च कार्याणामनन्तवैचित्र्यं न घटते। न च संयोगवैचित्र्याद् वैचित्र्यं स्यादिति वाच्यम्; विभूनां त्रयाणां गुणानां स्वतः संयोगवैचित्र्यासम्भवात्, द्रव्यान्तरस्य चावच्छेदकीभूतस्याभावादिति।

---

९. प्रवादोऽयं बहुत्र दृश्यते—'सुखदुःखमोहात्मक-सत्त्वरजस्तमोरूपं प्रधानम्······ (पू० मी० १।३।१ वार्त्तिक-न्यायसुधा); भामती २।२।१; जगदचेतनं सुखदुःखमोहात्मकं सद् अचेतनस्यैव सुखदुःखमोहात्मक - कारणस्य कार्यं भवितुमर्हति (शारीरकभाष्य २।१।४); जगत्कारणस्य सुखदुःखमोहात्मकत्वं प्रधानत्वम् (तात्पर्यटीका २।१।१२)।

१०. अर्थम् अनुगता = अन्वर्था।

११. 'कोटिकोट्ययुतानीशे चाण्डानि कथितानि तु' 'अण्डानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः' इत्यादिकानि पुराणवचनानि द्रष्टव्यानि। अमेयायाः प्रकृतेरंशभूतानि ब्रह्माण्डानि असंख्येयानि स्युरेवेति न्यायोऽत्र द्रष्टव्यः।

तस्मात् सत्त्वादीन्यसङ्ख्यव्यक्तिकान्येव द्रव्याणि। तेषु त्रित्ववचनन्तु सत्त्वत्वादिविभाजकोपाधित्रयेण वैशेषिकाणां नवद्रव्यवचनवदिति सिद्धम्।

तानि च सत्त्वादीनि यथायोग्यमणुविभुपरिमाणकानि, अन्यथा रजसश्चलस्वभावत्ववचनविरोधात्, आकाशकारणत्वस्य च विभुत्वौचित्यात्, सर्वेषां कारणद्रव्याणां विभुत्वे कार्याणां परिच्छिन्नत्वानुपपत्तेश्च।

नन्वेवं वैशेषिकोक्तान्येव पार्थिवाणवादीनि प्रकृतिरित्यायातमिति चेत्, न; गन्धादिगुणशून्यत्वेन कारणद्रव्येषु पृथिवीत्वाद्यभावतोऽस्माकं विशेषात्। तदुक्तं विष्णुपुराणादिषु—

"अव्यक्तं कारणं यत् यत् प्रधानमृषिसत्तमैः।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥ १९ ॥
शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम् ॥ २० ॥
त्रिगुणं तज् जगद्योनिरनादिप्रभवाप्ययम्[१२] ॥" २१ ॥

इत्यादिना। वैशेषिकाणां कारणद्रव्येषु गन्धाद्यनुमानन्तु भाष्येऽस्माभिर्निराकृतम् ( द्र० सांख्यप्रवचनभाष्य १।६२, १।६५, अन्यत्र च )।

अथैवमपि प्रकृतेरणुविभुसाधारणसत्त्वाद्यनेकव्यक्तिरूपत्वेऽपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तव्यतिरिति, मैवम्; कारणद्रव्यत्वरूपप्रकृतित्वेनैवापरिच्छिन्नत्ववचनात्, गन्धत्वेन गन्धानां पृथिवीव्यापकतावत्, आकाशादिप्रकृतीनां विभुत्वेनैव प्रकृतिविभुत्वसिद्धान्तोपपत्तेश्च। तथा पुरुषभेदेन सर्गभेदेन च भेदाभावस्यैवैकशब्दार्थत्वात्,[१३] "अजामेकाम्" इति ( श्वेताश्व० ४।५ ) श्रुतितस्तथाऽवगमात्।

अथाध्यवसायाभिमानादिक्रियाराहित्यस्यैवाक्रियशब्दार्थत्वात्, अन्यथा श्रुति-

---

१२. विष्णु० १।२।१९–२१ ( असंहतमिति मुद्रितपुराणपाठः )। सदसदात्मकं कार्यकारणशक्तियुतम् इति श्रीधरः। वायु० ४।१८–२१ इत्यत्रापि इमे श्लोकाः।

१३. प्रकृतेस्तु भोग्यतया अभेदात् न भेद इत्यत एकत्वमित्यर्थः ( विवेक० )।

स्मृतिपूक्तस्य प्रकृतिक्षोभ[१४]स्यानुपपत्तेरिति । प्रकृतिगताश्चापरे विशेषा भाष्ये[१५] द्रष्टव्याः । प्रकृत्यनुमानं चेदम्—सुखदुःखमोहात्मकं महदादिकार्यं सुखदुःखमोहात्मकद्रव्यकार्यं सुखदुःखमोहात्मकत्वात् वस्त्रादिकार्यशय्यादिवदिति । श्रुतिस्मृती चात्रानुग्राहकस्तर्कः । एवं सामान्यतोऽनुमितायाः प्रकृतेर्विशेषाः शास्त्राद् योगाच्चावगन्तव्याः, अनुमानस्य सामान्यमात्रविषयकत्वात्[१६] ।

नन्वन्तरेव सुखादिकमुपलभ्यते, बाह्यवस्तुषु सुखादौ किं प्रमाणं येन दृष्टान्तता स्यादिति ? उच्यते—अन्तःकरणस्य सुखादिहेतुतया विषयेषु सुखादिकं सिध्यति; न च रूपादिगतोत्तमत्वादिकमेव सुखाद्युत्पादने नियामकम्, उत्तमत्वादेर्जातिरूपत्वे नीलत्व-पीतत्वादिना जातिसाङ्कर्यापत्तेः[१७], कालादिभेदैरेकस्या एव रूपव्यक्तेः सुखदुःखोत्पादकत्वाच्च । अतः सुखादिमत्त्वमेवोत्तमत्वादिकम् ।

किञ्च घटरूपमिति प्रत्ययवत् स्त्रीसुखं चन्दनसुखमित्यादिप्रत्ययादपि विषये सुखाद्युचितम् । अधिकन्तु भाष्ये ( १।२७; विज्ञानामृते च ) द्रष्टव्यम् । तदेवं प्रकृतिर्निरूपिता ।

महत्तत्त्वं निरूप्यते—प्रकृतेः सकाशाद् बुद्ध्याख्यं महत्तत्त्वं जायते; तस्य

---

१४. प्रकृतिक्षोभपराणीमानि वचांसि द्र०—क्षोभयामास योगेन परेण परमेश्वरः ( वायु० ५ । ११ ); प्रधानात् क्षोभ्यमाणात् तु रजो वै समवर्तत ( वायु० ५ । १२ ) ।

१५. प्रवचनभाष्यम् १।६१, १।६५, १।७५-७६, १।१२५–१३५ अन्यत्र च ।

१६. द्र० सामान्यमात्रे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम्—व्यासभा० १ । २५ ।

१७. "एकस्य नीलरूपादेरेव उत्तमस्य उत्तमभिन्नस्य च वर्तमानतया उत्तमत्वादिधर्मे नीलत्वादिसामानाधिकरण्यस्य स्वाव्याप्यत्वस्य तथा श्वेतरूपादौ उत्तमत्वस्य सत्त्वाच्च स्वाव्यापकत्वस्य सिद्धया नीलत्वादिनिरूपित—सांकर्यम् उत्तमत्वादौ प्रसक्तमिति भावः । तच्च उत्तमत्वादेर्जातित्त्वं प्रतिरुन्धे" ( प्रभा ) । जातिबाधकपदार्थविषये किरणावलीग्रन्थः ( द्रव्यप्रक० ) द्र० । नव्या नैयायिकाः सांकर्यं जातिबाधकरूपेण नाभ्युपगच्छन्ति ।

धर्मादिरूपप्रकृष्टगुणयोगात् महत्संज्ञा, तदेव च लक्षणम्। महान् बुद्धिः प्रज्ञेत्यादयश्च तस्य पर्यायाः[१८]; तथा चोक्तमनुगीतायाम् ( अश्व० ४०।२-१२ )—

"महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्यवान्।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः ॥ २ ॥
पर्यायवाचकैरेतैर्महानात्मा निगद्यते ॥ ३ ॥
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः।
सर्वतः श्रुतिमाँल् लोके सर्वं व्याप्य स तिष्ठति ॥ ४ ॥
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ ५ ॥
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ॥ ७ ॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ॥ ८ ॥
विष्णुरेवाऽऽदिसर्गेषु स्वयम्भूर्भवति प्रभुः[१९] ॥" १२ ॥ इति।

अत्र सत्त्वाद्यंशत्रयेण महतो देवतात्रयोपाधित्वात् तदविवेकेन ब्रह्मविष्णुशिवत्ववचनम्। तदुक्तं विष्णौ—

"सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्" ( १।१।३४ ) इति।

मात्स्ये च—

"सविकारात् प्रधानात्तु महत्तत्त्वमजायत।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ ३।१७
गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्त्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः[२०] ॥३।१६॥ इति।

अणिमेत्यादिभावनिर्देशो[२१] धर्मधर्म्यभेदात्। ब्रह्मशंकरापेक्षयाऽप्यादौ विष्णु-

---

१८. अहिर्बुध्न्यसंहितायां महतो नामान्युक्तानि —विद्या गौर्युवती ब्राह्मी वपुर्वृद्धिर्मतिर्मधुः ॥ ८ ॥ अख्यातिरीश्वरः प्राज्ञेत्येते तद्वाचका मुने ।९ ( अ० ७ )।

१९. 'तथा ख्यातिः', 'महानात्मा विभाव्यते' इति च मुद्रितभारत - पाठौ। गुणव्यञ्जनमित्यपि महतो नाम ( द्र० विष्णुपु० १।२।३३; श्रीधरकृतटीका च )। महन्नामविषये अनुशा० १४।४१६-४२० अपि द्र०।

२०. महत्तत्त्वं प्रजायते, क्षोभमाणेभ्यः इति च मुद्रितपुराणपाठौ।

२१. अनुगीता—( अश्व० ४२।५ ) श्लोकप्रयुक्तेषु अणिमादिषु केषुचन शब्देषु।

रूपेणैव महानाविर्भवतीति "विष्णुरेव" इत्यर्द्धेनोक्तम् ( अश्व० ४०।११ )।

इदमेव महत्तत्त्वमंशतो रजस्तमःसम्भेदेन परिणतं सद् व्यष्टिजीवानामुपाधि-धर्मादियुक्तं क्षुद्रमपि भवति—"महदुपरागाद् विपरीतम्" ( २।१५ ) इति साङ्ख्यसूत्रात्। महत्तत्त्वस्य प्राधान्येनासाधारण्येन चाध्यवसायो वृत्तिः, महद-हङ्कारमनस्त्रितयात्मकस्यान्तःकरणस्य महत्तत्त्वं बीजावस्थेति।

अत्र प्रकृतेर्महान् महतोऽहंकार इत्यादिसृष्टिक्रमे[२२] शास्त्रमेव प्रमाणम्, अनु-मानेन सामान्यतः कार्याणां सकारणकत्वमात्रसिद्धेः, न तु सृष्टौ भूतादिक्रमो वाऽन्तःकरणादिक्रमो वेत्येकतरावधारकमनुमानं सम्भवति, स्पष्टलिङ्गाभावात्। श्रुतिस्मृत्यनुगृहीतं यथाकथञ्चिल्लिङ्गन्तु महदादिक्रमेऽस्तीति भाष्ये ( २।१० ) ऽस्माभिः प्रदर्शितम्[२३]। महत्तत्त्वं निरूपितम्।

अहंकारो निरूप्यते—महत्तत्त्वादहंकार उत्पद्यते, अङ्कुरात् शाखिवत्। तस्य चाभिमानवृत्तिकत्वादहंकारसंज्ञा, कुम्भकारसंज्ञावत्[२४]; तदेव लक्षणम्। तस्य च पर्यायाः कौर्मे ( १।४।१९ ) प्रोक्ताः—

"अहंकारोऽभिमानश्च कर्त्ता मन्ता च संस्मृतः।
आत्मा देही च जीवश्च यतः सर्वाः प्रवृत्तयः[२५] ॥" इति।

स चाहंकारस्त्रिविधतया त्रिविधकार्यहेतुः। तदुक्तं कौर्मे ( १।४।१८–२३ )

---

२२. नियतः खलु महदादिसृष्टिक्रमः; क्रमानतिवृत्तिपदेन व्यासभाष्यप्रयुक्तेन (२।१९) नियततेऽयं ध्वन्यते।

२३. बौद्धैराचार्यैर्नेदृशः कश्चित् क्रम आस्थीयते—"न च प्रधानादिभ्यो महदाद्यु-त्पत्तिनिश्चये कश्चिदन्वयो व्यतिरेको वा प्रतीतोऽस्ति ··· ( तत्त्वसंग्रह १।१६ गता पञ्जिकाटीका )। सांख्यसूत्रभाष्ये ( १।६२–६५ ) महदादि-पदार्थविषयक मनुमान मुपन्यस्तं भिक्षुणा।

२४. अस्ति खलु 'अहम्' इति सुबन्तप्रतिरूपकम् अव्ययम्। अहं करोति=अहंकार इति।

२५. आत्मा च मत्परो जीवः यतः सर्वाः प्रवृत्तय इति मुद्रितपुराणपाठः।

"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहंकारो महतः सम्बभूव ह ॥ १८ ॥
तैजसादिन्द्रियाणि स्युर्देवा वैकारिकाद्[२६] दश ॥ २२ ॥
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम्[२७] ॥
भूततन्मात्रसर्गस्तु भूतादेरभवद् द्विजाः[२८] ॥ २३ ॥ इति ।

वैकारिकः सात्त्विकः । तैजसो राजसः । स्वगुणेनेन्द्रियवृत्तिषु साहाय्यरूपेणो-त्कर्षेण । उभयात्मकं ज्ञानकर्मोभयेन्द्रियात्मकम्; 'अन्यत्रमना अभूवं नाश्रौषम्' ( बृहदा० १।५।३ ) इत्यादिश्रुत्या मनसो ज्ञानकर्मोभयेन्द्रियसहकारित्वसिद्धेरिति । एकादशेन्द्रियदेवाश्च[२९]—दिग्वातार्कप्रचेतोऽश्वि-वह्नीन्द्रोपेन्द्रमित्रकचन्द्राश्च[३०] । इति अहंकारो निरूपितः ।

इन्द्रियादीनि निरूप्यन्ते—अहंकारादादौ मन उत्पद्यते ।

"शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघृक्षया[३१] ॥"
( शान्ति० २१३ । १६ )

इत्यादिना मोक्षधर्मादाविन्द्रियादीनां मनोवृत्तिरागादिकार्यत्वश्रवणात् ।

---

२६. तैजसानीन्द्रियाणि स्युर्देवा वैकारिका दशेति मुद्रितपुराणपाठः ।

२७. उभयात्मकमिति । मनावुक्तम्—'स्वगुणेनोभयात्मकम्' इति ( २।९२ ) । अत्राह मेधातिथिः—"स्वगुणो मनसः संकल्पः, तेनोभयं शुभमशुभं वा संकल्प्यते । अथवा बुद्धीन्द्रियेषु कर्मेन्द्रियेषु स्वविषयप्रवृत्तौ संकल्पमूलत्वाद् उभयात्मकमुच्यते" इति ।

२८. भूततन्मात्रसर्गोऽयं भूतादेरभवत् प्रजा इति भिक्षुधृत - पाठस्तु न समीचीनः प्रतिभाति ।

२९. द्र० सुबालोप० ५ ख०; अश्व० ४२ अ० ।

३०. जीवानन्दसंस्करणे 'दिग्वातार्क…मित्रकाः' इति श्लोकैकचरणरूपेण पठितम् । चन्द्राश्चेत्यपरं चरणम् ।

३१. 'गन्धचिकीर्षया' इति मुद्रितभारतपाठः ।

ततश्चाहंकारात् संकल्पपूर्वकं दशेन्द्रियाणि पञ्चतन्मात्राणि चोत्पद्यन्ते। इन्द्रिय-तन्मात्रयोश्च कार्यकारणभावस्याभावात् क्रमनियमो नास्ति।

तत्रेन्द्रियेषु नास्त्यवान्तरकार्यकारणभावः, प्रमाणाभावात्; तन्मात्रेषु त्वस्ति; स यथा—शब्दतन्मात्राद् वक्ष्यमाणक्रमेण स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकम्, एवं क्रमेणैकैकगुणवृद्ध्या परतन्मात्रत्रयं पूर्वपूर्वतन्मात्रेभ्य उत्पद्यते, पातञ्जलभाष्ये[३२] तन्मात्रेषु क्रमेणैकैकगुणवृद्धिवचनात्।

ततश्च पञ्चतन्मात्रेभ्यः पञ्चभूतानि जायन्ते। तत्राहंकारात् पञ्चतन्मात्राणां तद्द्वारा भूतानाञ्चोत्पत्तौ क्रमः कूर्मविष्ण्वादिपुराणेषूक्तः; यथा कूर्मे (१।४।२४—२५)—

"भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह।
आकाशं शुषिरं[३३] तस्मादुत्पन्नं शब्दलक्षणम्॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शो गुणो मतः[३४]॥"

इत्यादिक्रमेणेति।

नन्वेवमाकाशादिभूतचतुष्टयस्यापि तत्त्वान्तरारम्भकत्वेन[३५] प्रकृतित्वापत्त्या केवलविकृतित्वसिद्धान्तक्षतिरिति चेन्न; आकाशादीनां स्पर्शादितन्मात्रेष्वहङ्कारो-पष्टम्भमात्रेण कारणत्वस्य पुराणेषूक्तत्वादिति[३६]। तदेवं त्रयोविंशतितत्त्वाना-

---

३२. व्यासभाष्यम् २।१९—षडविशेषाः; तद् यथा शब्दतन्मात्रं स्पर्शतन्मात्रं रूप-तन्मात्रं रसतन्मात्रं गन्धतन्मात्रं च इत्येकद्वित्रिचतुष्पञ्चलक्षणाः...।

३३. शुषिरम्=अवकाशलक्षणम्।

३४. 'तस्य स्पर्शं गुणं विदुः' इति मुद्रितपुराणपाठः।

३५. द्र० 'तत्त्वान्तरारम्भकत्वं प्रकृतित्वम्' (तत्त्वकौमुदी, का० ३)।

३६. भूत-तन्मात्रमयं ग्राह्यं जगदहंकारप्रसूतमिति सांख्यमतं भारते दर्शितम्—त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् इति (शान्ति० २१२।१६)। अहंकारश्च सृजति महाभूतानि पञ्च वै। पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् इत्यपि पठ्यते (शान्ति०, कुं० संस्क०)। अत्रार्थे 'अहंकारेणाहरतो गुणान्...' श्लोको द्र० (अश्व० ४१।५)।

मुत्पत्तिरुक्ता ।

तत्र पञ्चभूतानि वर्जयित्वा अहङ्कारञ्च बुद्धौ प्रवेश्य सप्तदशकं लिङ्ग[३७]-शरीरसंज्ञं भवति, वह्नेरिन्धनवदात्मनोऽभिव्यक्तिस्थानत्वात् । तच्च सर्वपुरुषाणां सर्गादावुत्पद्य प्राकृतप्रलयपर्य्यन्तं तिष्ठति, तेनैव चेहलोकपरलोकयोः संसरणं जीवानां भवति । प्राणश्च बुद्धेरेव[३८] वृत्तिभेद इत्यतो न लिङ्गशरीरात् पृथङ् निर्दिश्यते । तस्य लिङ्गशरीरस्य सूक्ष्माणि पञ्च भूतान्याश्रयश्चित्रादिवत्,[३९] आश्रयं विना परमसूक्ष्मस्य लोकान्तरगमनासम्भवात् ।

इदञ्च लिङ्गशरीरमादौ स्वयम्भुव उपाधिभूतमेकमेव जायते, तस्यैव विराडाख्य-वक्ष्यमाणस्थूलशरीरवत् । ततश्च व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि

---

३७. सप्तदशक-लिङ्ग - विषये इमानि वचनानि द्रष्टव्यानि—'सूक्ष्मशरीरं नाम अपञ्चीकृतभूतकार्यं सप्तदशकं लिङ्गम् । सप्तदशकं नाम ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणादिवायवः पञ्च बुद्धिर्मनश्च' ( आत्मानात्मविवेक ); बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया । शरीरं सप्तदशभिः सूक्ष्मं तल् लिङ्ग-मुच्यते ॥ ( पञ्चदशी, तत्त्वविवेक २३ ); सप्तदशकं लिङ्गशरीरकम् ( शिव-गीता १४।२१ ); सप्तदशविधं लिङ्गम् ( बृहदा० ३।७।२ भाष्य ); सप्तदशकं लिङ्गम् ( बृहदा० ४।३।२० भाष्य ); यद्यपि पञ्चप्राणमनोबुद्धिदशेन्द्रिय-समन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ इति सप्तदशकं लिङ्गं तथापि मनसि बुद्धेर्दशेन्द्रियेषु 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चे'ति सांख्यमतेन प्राणपञ्चकस्य चान्तर्भावं ( वनपर्व २१२।१८ टीका )

३८. यथोक्तं लक्ष्मीतन्त्रे—महांस्तामस आख्यातो विकारः पूर्वकैर्बुधैः ॥ प्राणो हिरण्यगर्भश्च बुद्धिश्चेति त्रिधा भिदा । ५।३१–३२ । अहिर्बुध्न्यसंहितायामपि—महन्नाम महत्तत्त्वमव्यक्तादुदितं मुने ॥ कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते । ७।८–९ ।

३९. लिङ्गशरीराश्रयभूत–भूतपञ्चकविषये द्र० विज्ञानामृतभाष्यम् ( सूक्ष्मं प्रमाणतश्चेति सूत्रम्, अस्यैव चोपपत्तेरिति सूत्रं च ) ।

तदंशभूतानि ततो विभज्यन्ते, पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत् । तदुक्तं सूत्रकारेण—"व्यक्तिभेदः कर्मविशेषात्" (३।१०) इति । मनुनाऽप्युक्तम् (१।१६)

"तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
सन्निवेश्याऽऽत्ममात्रासु सर्वभूतानि निर्ममे[४०] ॥" इति

षण्णामिति षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकम्; तथा च स्वयम्भूः स्वलिङ्गशरीरावयवान् सूक्ष्मान् अल्पान् आत्ममात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेत्यर्थः ।

लिङ्गशरीरं निरूपितम् । स्थूलशरीरोत्पत्तिरुच्यते—दशगुणितमहत्तत्त्वमध्येऽहङ्कारः, अहङ्कारस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगुणितस्य मध्ये वायुः, वायोरपि दशगुणितस्य मध्ये तेजः, तेजसोऽपि दशगुणितस्य मध्ये जलम्, जलस्यापि दशगुणितस्य[४१] मध्ये पृथिवी समुत्पद्यते; सैव स्थूलशरीरस्य बीजम्; तदेव च पृथिवीरूपं बीजमण्डरूपेण परिणमते; तस्यापि दशगुणितस्याण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्सङ्कल्पादेवोत्पद्यते, तेनैव शरीरेण स्वयम्भूर्नारायण इत्युच्यते । तदुक्तं मनुना (१।८–१०) स्वयम्भुवं प्रकृत्य—

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जाऽऽदौ तासु बीजमवासृजत् ॥ ८ ॥

---

४०. अत्राह मेधातिथिः—तत्र षट्संख्यया वक्ष्यमाणानि पञ्च तन्मात्राणि अतिक्रान्तश्चाहंकारः प्रतिनिर्दिश्यते ।

४१. दशगुणितपरिमाण-अण्ड-अण्डावरणविषये विष्णुपुराणे उक्तम्—एतदण्डकटाहेन तिर्यक्चोर्ध्वमधस्तथा । कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ।२२ दशोत्तरेण पयसा मैत्रेयाण्डं च तद् वृतम् । सर्वोम्बुपरिधानोऽसौ वह्निना वेष्टितो बहिः ॥२३॥ वह्निश्च वायुना वायुर्मैत्रेय नभसावृतः । भूतादिना नभः सोऽपि महता परिवेष्टितः ॥२४॥ दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै । महान्तं च समावृत्य प्रधानं समवस्थितम् ॥२।६।२५॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः[४२] ॥ ९ ॥

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्तत[४३] ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥" १० ॥

इत्यादिनेति । तत एव चादिपुरुषाद् व्यष्टिपुरुषाणां विभागादन्ते च तत्रैव लयात् स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते । अतो न व्यवहारपरतया नारायण एव सर्वभूतानामात्मेति श्रुतिस्मृतिविरोध इति ।

ततश्च स नारायणो विराट्शरीरी स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यस्वयम्भुवं सृष्ट्वा तद्द्वारा अन्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज । तथा च स्मर्यते—

"तच्छरीरसमुत्पन्नैः कार्यैस्तैः कारणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः ॥" इति

( पद्म ५।३।१५६ )

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याऽऽविर्भावः

---

४२. मनु ( १।९ ) श्लोकव्याख्याने मेधातिथिराह—"ब्रह्मा हिरण्यगर्भ एव, स्वयमिति उक्तार्थं योगशक्त्या प्राग्-गृहीतं शरीरं परित्यज्य अन्तरण्डमनुप्राविशत् । अथवा अशरीर एव अपः ससर्ज, ततोऽन्तरण्डं स्वशरीरं जग्राह । अथवा अन्यो योऽसौ ( श्लो० ७ ) इत्यत्र निर्दिष्टः; अन्यश्च अयमण्डजो ब्रह्मा इति; तथाच वक्ष्यति—तद्विसृष्टः ( श्लो० ११ )—इति, तेनेश्वरेण सृष्टः" इति ।

४३. स वै ··इति श्लोको मनौ नोपलभ्यते, पुराणोपपुराणेषु तूपलभ्यते इति ज्ञातव्यम् ।

श्रूयते, तद् दैनन्दिनसर्गेष्वेव[४४] कल्पभेदेन[४५] मन्तव्यम् । दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाविर्भावः शेषशायिनः सकाशाद् घटते, न त्वादिसर्गेषु; दैनन्दिनप्रलय एव लीलाविग्रहेण शयनादिति ।

तदेवं संक्षेपतश्चतुर्विंशतितत्त्वानि तेषां सृष्टिरूपं प्रयोजनञ्चोक्तम् । तत्र यद् यस्माज् जायते तस्य तदापूरणेनैव[४६] स्थितिः, ततस्तस्य संहारोऽपि तत्रैव भवति—

"यद् यस्माज् जायते तत्त्वं तत् तत्र प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥"
इति भारतादिभ्य इति[४७] ( अश्वमेध० ४२।४ ) ।

एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाश्चतुर्विंशतितत्त्वानां कूटस्थ-पुरुषविवेकाय प्रदर्शिताः; सूक्ष्मा अप्यन्ये प्रतिक्षणपरिणामा एतेषां स्मर्यन्ते । तथा च—

---

४४. दैनन्दिनी सृष्टिर्विष्णुपुराणे ( १।७।४१ ) उक्ता—'दैनन्दिनी तथा प्रोक्ता यान्तरप्रलयादनु' इति । 'अवान्तरप्रलयादनन्तरं या चराचरसृष्टिः सा दैनन्दिनी' ( श्रीधरः ) ।

४५. कल्पभेदेन सृष्ट्यवान्तरभेदकथनं पूर्वाचार्यसंमतम् । यथाह नीलकण्ठः— कल्पभेदेनोभयमप्युपपद्यते । तथा पुराणेषु क्वचिच् शिवाद् ब्रह्मविष्ण्वोरुत्पत्तिः क्वचित् तु ब्रह्मणः सकाशाच् शिवविष्ण्वोः, क्वचिद् गणेशादेतेषां त्रयाणां, तथा सूर्यादेतेषां त्रयाणां कल्पभेदेनोत्पत्तिरभिहिता ( देवीभाग० नवमस्कन्ध-टीकारम्भे ) ।

४६. आपूरणविषये योगसू० ४।२-३ द्र० ।

४७. मुद्रितपाठस्तु 'यस्माज् जायते भूतं तत्र तत्' इति । अन्यत्र पठ्यते—यस्माद् यदभिजायेत तत् तत्रैव प्रलीयते । लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ॥ इति ( शान्ति० ३०६।३१ ) । उत्तरोत्तरम् अनुलोमम् आकाशवाय्वग्नि-सलिलपृथिवीक्रमेण ( नीलकण्ठकृतटीका ) ।

"नित्यदा[४८] ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥"

( भागवत ११।२२।४२ ) इति ।

अतश्च सर्वं जड़वस्तु परमार्थतः सर्वदैवासदुच्यते; ततश्च तस्माद् विरज्याऽऽत्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः । तदुक्तमनुगीतायाम्[४९] ( अश्व० अ० ३५ ) ।

"अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहंकारविटप इन्द्रियाङ्कुरकोटरः ॥ २० ॥
महाभूतप्रशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥ २१ ॥
आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतज्ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना ॥ २२ ॥
छित्त्वा चाक्षरतां प्राप्य जहाति मृत्युजन्मनी[५०] ॥ २३ ॥

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे विवेकप्रतियोगिनां प्रकृत्यादीनां स्वरूपपरिच्छेदः ।

॥ इति सांख्यसारस्य पूर्वभागः ॥

—: ०० :—

---

४८. अत्राङ्गेति संबोधनपदम्, तथैव सर्वैर्भागवतव्याख्याकृद्भिर्व्याख्यानात् ।

४९. 'महाभूतविशेषश्च', 'सदाशुभफलोदयः', 'ब्रह्मबीजः सनातनः', 'तत्त्वानि ज्ञानेन' इति च मुद्रिते भारते पठ्यन्ते ।

५०. विटपः=पल्लवः, इन्द्रियाण्येव अङ्कुराः अनर्थवल्लीपूर्वरूपभूताः कोटरेषु छिद्रेषु यस्य; विशेषस्तिलकः पुष्पकोरकस्थानीयो यस्य; विशेषाः स्थूलकार्याणि तान्येव प्रतिशाखा उपशाखास्तद्वान् । पर्णमुत्पद्य पतनशीलः संकल्पः । पुष्पं कर्म । फलं सुखादि । एतद् बीजभूतं ब्रह्म ज्ञात्वा ..... ( नीलकण्ठ-टीका ) ।

## उत्तरभागः

### प्रथमः परिच्छेदः

अथ शिष्यैः सुखेनैव ग्रहीतुं पद्यमालया ।
विवेकस्यानुयोग्यात्मा[1] पुरुषाख्यो निरूप्यते ॥ १ ॥
तत्र सामान्यतः[2] सिद्धो जानेऽहमिति[3] धीबलात् ।
द्रष्टाऽतो नित्यविभ्वादिधर्मैरेव[4] स साध्यते ॥ २ ॥
भोक्ता[5] नित्यस्तदर्थत्वात् तत्कर्मोत्पादितत्वतः[6] ।
महदादिविकाराणां सर्वेषामविशेषतः ॥ ३ ॥

---

१. विवेकस्य=पार्थक्यज्ञानस्य; अनुयोगी = स्वरूपसम्बन्धेन भेदाधिकरणम्; अनुयोगितारूप-स्वरूपसम्बन्धाश्रयः ।

२. सामान्यतः=शरीराद्यव्यतिरेकेण अहंरूपेण; धीबलात्=मानसप्रत्यक्षबलात् । अत्र 'आत्मा ज्ञानाश्रयः' इति बोधो भवति ।

३. तुलनीयमुद्योगपर्ववाक्यम्—आत्मनाऽत्मानमन्विच्छेत् इति । अत्राह देवबोधः—आत्मना अहमिति प्रतीतिलक्षणेन चिद्रूपेण आत्मानं तमेवान्विच्छेत् ( ३४ । ६२ ) ।

४. नित्यत्व-विभुत्वादिधर्मैरित्यर्थः । निर्गुणोऽपि आत्मा नित्यत्वादिधर्मवानिति ज्ञेयम् ।

५. द्र० अन्ये तु संक्रान्तविषयरूपाया बुद्धेरात्मनि समवायाद् बुद्धिरूपनिवेशेन तद्रूपतामिवापन्ने बोधात्मके पुरुषे पुरुषार्थस्य प्रसिद्धिं मन्यन्ते । प्रकाशस्वभावया बुद्ध्या चितिस्वरूपस्यार्थस्य प्रतिबिम्बकयोगेन उपग्रहे सम्भवति प्राप्तविषयरूपविपर्यासायाम् उपगृहीतपुरुषरूपायां बुद्धौ भोग्यभोक्तृशक्त्योः अत्यन्तविविक्तयोः अत्यन्तासंकीर्णयोः अविभागप्राप्ताविव सत्यां विभागः ( भोग : ? ) प्रकल्पते ( वाक्यप० टीका २।३१ ) ।

६. आत्मकर्मणा उपार्जितत्वादित्यर्थः; द्र० सांख्यसू० २।४६। ।

अपि चादृष्टसंस्काराधारत्वाद् बीजरूपतः ।
धीरनादिरतोऽस्याश्च सिद्धा भोक्तुरनादिता[७] ॥ ४ ॥

स्वस्वामिभावानादित्व[८] मृते भोक्तृव्यवस्थितेः ।
स्वभुक्तवृत्तिसंस्कार[९] - वत्त्वं स्वत्वन्तु बुद्धिषु ॥ ५ ॥

स्वाम्यं[१०] स्वनिष्ठसंस्कार-हेतुवृत्तेश्च भोक्तरि ।
अतश्च घटते स्वत्व - नाशे कैवल्यमात्मनः ॥ ६ ॥

भोक्तुश्चानादिभावस्य विनाशे हेत्वसम्भवात् ।
न नाशो भोक्तुरस्तीति भोक्ता नित्यो हि सिध्यति ॥ ७ ॥

जन्यो ज्ञानप्रकाशोऽस्य नित्यत्वे तु न युज्यते[११] ।
न ह्यप्रकाशे कुत्रापि प्रकाशोत्पत्तिरीक्ष्यते ॥ ८ ॥

कार्य्ये प्रकाशाख्यगुणोऽवयवानां हि तद्गुणः ।
कारणं[१२] तेन नानित्यः प्रकाशो नित्यवस्तुनि ॥ ९ ॥

प्रकाशाश्रयसंयोगात् प्रकाशभ्रम इन्धने ।
आदर्शे चावृतेर्भङ्गात्[१३] प्रकाशोत्पत्तिविभ्रमः ॥ १० ॥

---

७. प्रलयकाले अनादिर्बुद्धिः सूक्ष्मरूपेणावतिष्ठते, अतः बुद्धिभोक्तुरात्मनोऽनादिता ।

८. द्र० सांख्यसू० ६।६७ ।

९. स्वभुक्तवृत्तिजन्यसंस्कारवत्वं स्वत्वम् (विवेक०) । "पुरुषविशेष-बुद्धिविशेषयोः स्वस्वामिभावः सम्बन्धः समन्वेतीति बोध्यम्" ( सार० ) ।

१०. स्वाम्यं=स्वामित्वम्, तच्च स्वप्रतिबिम्बित - संस्कारजनकवृत्तिप्रकाशकत्वम् ( विवेक० ) ।

११. यदि आत्मप्रकाशो जन्यः स्यात् तर्हि आत्मा स्वरूपतोऽप्रकाशात्मकः स्यात् । नात्मा एवंविधः ।

१२. तेन=नित्ये वस्तुनि सति अनित्यप्रकाशोत्पत्ते रसम्भवेन ।

१३. घर्षणादिना दर्पणे आवरकमलस्य नाशात् ।

तस्मान्नित्यात्मनो ज्ञानं नित्यं वाच्यं तथा सति ।
लाघवा[१४]ज्ज्ञानमेवात्मा[१५] निराधारः प्रकल्प्यते ॥ ११ ॥

अनाश्रिततया द्रव्यं संयोगादेश्च तन्मतम् ।
अतो जानेऽहमित्यादि - बुद्धिरप्युपपद्यते[१६] ॥ १२ ॥

पिण्डेऽहंधी र्हि मूढानां ध्रुवैवानादिदोषतः ।
संयोगात् तत्र पिण्डे तु ज्ञानवत्त्वमतिः प्रमा ॥ १३ ॥

सन्तु वाऽधेयताल्पत्व - जन्मनाशादिबुद्धयः ।
श्रोत्रस्य नभसीवार्थ - ज्ञानस्य ज्ञानमात्रके[१७] ॥ १४ ॥

तस्माल्लाघवतर्केण[१८] बाधकाभावतस्तथा ।
श्रुत्यादिभिश्च नित्यात्मा चिद्रूपेणैव[१९] सिध्यति ॥ १५ ॥

---

१४. आत्मनि ज्ञानं जन्यते—इत्यभ्युपगमे आत्म-मनः–तत्संयोगानां हेतुता स्वीकरणीया । यदि पुनः नित्यज्ञानरूप एव आत्मा स्वी क्रियते तर्हि कल्पनालाघवं स्यात् ।

१५. अतएव दृशिमात्रः पुरुष इत्युच्यते । उक्तं च विवरणकारेण—दृशिर्दर्शनस्तावन्मात्रो दृशिमात्रः ( २।२० ) ।

१६. ज्ञानरूप आत्मा द्रव्यमेव, न तु गुणः कर्म वा । श्लोके 'तत्'=आत्मरूपं ज्ञानम् । 'अहं जाने' इत्यत्र ज्ञानेन सह अहमर्थस्य कर्तुरात्मनः अभेदो बुध्यते । यदि अहं-प्रतीतिसिद्ध आत्मा ज्ञानभिन्नः स्यात् तर्हि प्रतीतिरियम् अनुपपन्ना स्यात्, अतः ज्ञानात्मनोरभेद एव ।

१७. ज्ञानस्य नित्यत्वे विभुत्वेऽपि तस्मिन् घटपटाद्याकारवृत्त्यवच्छेदात् आधेयताल्पताजन्मनाशादिविशिष्टबुद्धयो जायन्त इत्यर्थः ।

१८. आत्मा जन्यज्ञानाश्रय इति कल्पनापेक्षया आत्मा नित्यज्ञानरूप इति कल्पने लाघवं भवति ।

१९. द्र० आत्मा हि चिच्छक्तिस्वरूपमात्रः सर्वप्रत्ययदर्शी प्रत्ययैरेव प्रत्ययेषु अविशिष्टतया लक्ष्यते ( केन० उप० १।४ भा० ) ।

तज्ज्ञानं विभु नित्यत्वात् देहव्यापितयाऽपि च ।
मध्यत्वे नाशिता हि स्यादणुत्वे वाऽल्पदेशता ॥ १६ ॥
विभुत्वेऽपि स्वधीवृत्तेरेव[20] साक्षान्निरीक्षणात्[21] ।
न सर्वत्र सदा सर्वभानं ज्ञाने प्रसज्यते ॥ १७ ॥
अर्थभानं चितावर्थ - प्रतिबिम्बो मतो बुधैः ।
वृत्तेरेव चितौ साक्षात् प्रतिबिम्बनयोग्यता[22] ॥ १८ ॥
अतोऽसंगेऽपि[23] कूटस्थ-चैतन्ये विभुनि ध्रुवे ।
वृत्तिद्वारकमेवान्य-भानं फल[24]बलान्मतम्[25] ॥ १९ ॥

---

२०. स्वधीवृत्तिः = आत्मस्वत्वविशिष्टबुद्धिवृत्तिः ।

२१. स्वधीवृत्तीक्षणादेव पुरुषः प्रत्यगात्मेत्युच्यते—प्रत्यक् स्वबुद्धिं चेतयते इति प्रत्यक्-चेतन आत्मेत्याह विवरणकारः ( १।२९ ) । बुद्धिबोधात्मा पुरुष इति व्यासभाष्यम् ( १।४ ) । आह शंकराचार्यः—अन्तःस्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं तेन सवृत्तिकं मनो येन ब्रह्मणा मतं विषयीकृतं व्याप्तमाहुः ( केनभाष्यम् १।५ ) ।

२२. "चित्स्वरूपेणात्मना प्रकाशितां वृत्तिं द्वारीकृत्य आत्मनि अर्थस्य प्रतिबिम्ब एव अर्थज्ञानरूपं फलम् इति प्राचीनानां सिद्धान्तः" ( सार० ) ।

२३. अतः = चैतन्ये बुद्धिवृत्तेरेव साक्षात् प्रतिबिम्बनयोग्यत्वात् ( विवेक० ) ।

२४. कदाचित् कुत्रचिद् अर्थप्रकाशरूप-फलदर्शनात् ( विवेक० ) ।

२५. उक्तं च युक्तिदीपिकायाम्—तथा च वार्षगणाः पठन्ति—बुद्धिवृत्त्याविष्टो हि प्रत्ययत्वेन अनुवर्तमानामनुयाति यथा पुरुष इति । तथा च—अर्थाकार इवाभाति यथा बुद्धिस्तथा पुमान् । आभासमानो बुद्ध्याऽतो बोद्धा मणिवदुच्यते ॥ यथा यथा मनोवृत्तिः पुरुषोऽपि तथा तथा । बुद्धिरूपमवाप्नोति चेतनत्वात् पराश्रयम् ॥ इति ( १७ कारिकाव्याख्यानम् ) ।

अन्वयव्यतिरेकाभ्यां[२६] वृत्तिजन्यतयाऽखिलः ।
वृत्त्यैकाधिकरण्येन कामादिर्धीषु नात्मसु ॥ २० ॥

अतोऽन्तःस्थविकाराणां स्वस्वबुद्धिष्ववस्थितेः ।
कूटस्थ एव सर्वोऽपि चिदाकाशगणः समः[२७] ॥ २१ ॥

नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरञ्जनः ।
स्वप्रकाशो निराधारः प्रदीपः सर्ववस्तुषु[२८] ॥ २२ ॥

नन्वेवमेकतैवास्तु लाघवादात्मनां खवत् ।
धीष्वेव सुखदुःखादि-वैधर्म्यादिति[२९] चेन्न तत् ॥ २३ ॥

भोगाभोगादिवैधर्म्येणैकरूपेऽपि[३०] चिद्गणे ।
श्रुतिस्मृतिभ्यामुक्तेन भेदसिद्धेः परस्परम् ॥ २४ ॥

सुखादिप्रतिबिम्बात्मा भोगोऽप्यस्य[३१] न वस्तुतः ।
तथाऽप्यस्य चितौ भावाभावौ स्यातां हि भेदकौ ॥ २५ ॥

औपाधिकौ यथा श्याम-रागौ स्फटिकभेदकौ ।
खदृष्टान्तश्च विषमो वैधर्म्यासिद्धितोऽम्बरे[३२] ॥ २६ ॥

इति श्रीविज्ञानभिक्षुविरचिते सांख्यसारे पुरुषस्वरूपपरिच्छेदः ।

---

२६. बुद्धिवृत्तिसत्त्वे कामसंकल्पादिदर्शनं भवति, बुद्धिवृत्त्यभावे ( =समाध्यादौ ) कामसंकल्पाद्यदर्शनं भवति, अतो गम्यते कामादयो बुद्धिवृत्तिजन्या इति ।

२७. समः = उदय-व्यय-धर्मशून्यः, यद् वा विरुद्धधर्माभाववान् ।

२८. स्वप्रकाशः =अन्यानपेक्षप्रकाशः । अत्र प्रदीपशब्देन भासकत्वमुच्यते ।

२९. सुखदुःखादिरूपविरुद्धधर्माध्यासादित्यर्थः ।

३०. एकरूपे=तुल्यरूपे ।

३१. भोगः बुद्धिवृत्तीनामात्मनि प्रतिबिम्बलक्षणः, न सुखदुःखसाक्षात्कारमात्रम् ।

३२. आकाशे वैधर्म्याभावान् न तद्भेदः, अत आकाशदृष्टान्तेन नात्मैकत्वं सिध्यति ।

## द्वितीयः परिच्छेदः

अथात्मानात्मवैधर्म्ये गुणदोषात्मके[१] तयोः ।
वक्ष्ये विस्तरतो येन विवेकोऽतिस्फुटो भवेत्[२] ॥ १ ॥
सामान्यात्मघनाकाशे सान्निध्येरितशक्तिभिः[३] ।
जायते लीयते भूत्वा भूयोऽयं जगदम्बुदः ॥ २ ॥
त्रिगुणात्मकशक्तीनां परिणामैरतश्चितिः ।
आधारविधया[४] विश्वोपादानमविकारतः ॥ ३ ॥
यथाऽधारतया तोयं धरोपादानमिष्यते ।
स्वस्थपार्थिवतन्मात्र - द्वारेणैवं चितिर्मता ॥ ४ ॥
अतो जगदुपादानमपि ब्रह्माऽविकारतः ।
कूटस्थनित्यपर्य्याय - परमार्थसदुच्यते[५] ॥ ५ ॥
स्वार्थत्वात्[६] स्वानुभूत्या च सिद्धत्वात परमार्थसत् ।
स्वतः स्थित्या स्वतः सिद्धचा लोकैः सन्निति गीयते ॥ ६ ॥

---

१. उपादेयाः खलु आत्मधर्मा गुणात्मकत्वात, हेयाः खलु अनात्मधर्मा दोषात्मकत्वात्—इति विज्ञेयम् ।

२. प्रकृतिपुरुषभेदो यदा समाधिना ज्ञातो भवति, तदा तज्ज्ञानं विवेक इत्युच्यते । विवेकख्यातौ सिद्धायां चित्तव्यापारा निवर्तन्ते, अतएव 'विवेकख्यातिपर्यन्तमज्ञानाच् चित्तचेष्टितम्' इत्युक्तं सांख्याचार्यैः ( वचनमिदं बृहदा० ४।५।१५. गिरिटीकायामुद्धृतम् ) । अतएव विवेकज्ञानस्य विशदीकरणमावश्यकमिति कृत्वा भिक्षुणेदं प्रकरणमारब्धम् ।

३. सान्निध्यप्रयुक्तसामर्थ्यैरित्यर्थः । तदपेक्षास्थिरत्वत इति पाठो भ्रष्टः ।

४. आधारविधया = अधिष्ठानरूपतः । चिद्रूपः पुरुष आत्मा; स च अधिष्ठानतया सर्वस्य उपादानकारणमित्युच्यते ।

५. आत्मनो यद् अविकारित्वं तदेव परमार्थसत्त्वम् ।

६. स्वार्थत्वात् = अनन्यशेषत्वात्, अपरार्थत्वादिति यावत् । स्वानुभूत्या = स्वयंप्रकाशत्वेन । स्वातिरिक्तज्ञानान्तराविषयत्वं स्वयंप्रकाशत्वम् । स्वतः स्थित्या = यतः स्वस्थितौ अधिकरणापेक्षा नास्ति । स्वतः सिद्धचा = यतः स्वसिद्धौ प्रमाणान्तरापेक्षा नास्ति ।

प्रतिक्षणविकारेण तैस्तै रूपैरपायतः ।
प्रकृत्यादिरसन् सर्वो जडार्थोऽब्धौ तरङ्गवत् ॥ ७ ॥
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतां तत् वस्त्वित्यादिकस्मृतेः[७] ॥ ८ ॥
परार्थाधीनसत्त्वाच्च[८] परदृष्टया च सिद्धितः ।
परतः सन्नसन्नेव[९] तत्परापेक्षया मतः ॥ ९ ॥

---

७. 'यत्तु ...वस्तु' ( विष्णु० २।१३।९५ )। वाक्यमिदं ज्ञापयति यद् असत्त्वं खलु परिणामित्वरूपम् । तदेव परमार्थसद् यत् कदाचिदपि नान्यथात्वं गच्छति । अत एव परिणामिनः प्राधानादेरसत्त्वम् उच्यते । अन्यसंज्ञाम् = अवस्त्वादिसंज्ञाम् ।

८. परार्थाधीनसत्त्वात् = परस्य ( = स्वभिन्नस्य आत्मनः ) अर्थस्य ( = प्रयोजनस्य भोगापवर्गरूपस्य ) अधीनं ( = प्रयोज्यं ) सत्त्वं यस्य, तस्य भावः सत्त्वात् ( विवेक० ) परदृष्ट्या = प्रधानादीनां जडत्वेन पौरुषेयज्ञानेनैव तेषां निश्चयात् ( विवेक० ) । परापेक्षया = आत्माश्रयेण अवस्थितेः ( विवेक० ) ।

९. जगतः सदसत्त्वविषये योगवासिष्ठवाक्यानि यथा—न सन्नासन्नसञ्जातश्चेतसो जगतो भ्रमः । अथ धीसमवायानामिन्द्रजालमिवोत्थितः ॥ ( ३।६५।६ ) । नातः सत्यमिदं दृश्यं न चासत्यं कदाचन ( ३।४४।३३ ) । न तत् सत्यं न चासत्यं रज्जुसर्पभ्रमो यथा ( ३।४४।४१ ) । न सत्यं न च मिथ्यैव स्वप्नजालमिवोत्थितम् । एवं न सन्नासदिदं भ्रान्तिमात्रं विभासते । ॥ ३।४४।२७ ॥ असत्यमस्थैर्यवशात् सत्यं सम्प्रतिभासतः । यथा स्वप्नस्तथा चित्तं जगत् सदसदात्मकम् ( ३।६५।५ ) । यथा नभसि मुक्तालीपिच्छकेशोण्ड्रकादयः । असत्याः सत्यतां याता भात्येवं दुर्दशां जगत् ॥ ॥ ३।४२।७ ॥ असत्यमेवं सत्याभं प्रतिभानमिदं स्थिरम् । अकृतं चानभूतं च न सत्यं सत्यवत् स्थितम् ॥ ३।१३।४२ ॥

सतोऽस्तित्वन्तु नासत्ता नास्तित्वे सत्यता कुतः ।
इति गारुडतश्चैवं सदसत्त्वव्यवस्थितेः ॥ १० ॥

अतो न सन्नासदिदं जगत् सदसदात्मकम्[१०] ।
असद्विषयकत्वाच्च तस्य धीस्तात्त्विको भ्रमः ॥ ११ ॥

जगद्वृक्षस्य चैतन्यं सारोऽसारस्तथेतरत्[११] ।
प्रपञ्चस्य स्थिरांशो हि चितिरेवाविकारतः ॥ १२ ॥

तदन्यदखिलं[१२] तुच्छमसारत्वादुदीर्य्यते ।
तथाऽनृतमसच्चापि तदपेक्षयास्थिरत्वतः[१३] ॥ १३ ॥

एवंविधै[१४]रात्मसत्ता अन्याऽसत्ता च दर्शिता ।
वासिष्ठादौ विस्तरतो यथा लेशात् तदुच्यते ॥१४॥

"स्वप्नो जाग्रत्यसद्रूपः स्वप्ने जाग्रदसद्वपुः ।
मृतिर्जन्मन्यसद्रूपा मृतौ जन्माप्यसन्मयम् ॥१५॥

जगन्मयी[१५] भ्रान्तिरिति न कदाऽपि न विद्यते ।
विद्यते न कदाचिच्च जलबुद्बुदवत् स्थितम्[१६] ॥१६॥

आत्मैवास्ति परं सत्यं नान्याः संसारदृष्टयः ।
शुक्तिकारजतं यद्वद् यथा मरुमरीचिका ॥१७॥

---

१०. सत्=परिणामिसत्तावत्, असत्=पारमार्थिकसत्ताभाववत् ।

११. यथा वृक्षेण तदीयः सारभागः स्वाभ्यन्तरे आवृत्य रक्ष्यते तथैव जगत्-प्रपञ्चेन आत्मन आवरणाच् चैतन्यस्य सारत्वम् ( सार० ) ।

१२. तुच्छं खलु विकृतिमत्त्वात् ।

१३. तच् चैतन्यम् अपेक्ष्य अस्थिरत्वाद् हेतोरित्यर्थः ।

१४. एवंविधा=स्थिरत्वास्थिरत्वरूपा ।

१५. जगन्मयी भ्रान्तिः—जगति स्थिरताबुद्धिभ्रमरूपेत्यर्थः ।

१६. यतो गुणाश्चलस्वभावा अतो जगदपि जलबुद्बुदवद् अस्थिरमेव तत्त्वतः; नास्य नित्या स्थितिर्विद्यते—इति तात्पर्यम् ।

अस्ति सर्वगतं शान्तं परमात्मघनं शुचि ।
अचिन्त्यचिन्मात्रवपुः परमाकाशमाततम्[१७] ॥१८॥

तत् सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम् ।
यत्र यत्र यथोदेति तथाऽऽस्ते तत्र तत्र वै[१८] ॥१९॥

आविर्भाव - तिरोभाव - मयास्त्रिभुवनोर्मयः ।
स्फुरन्त्यतितते यस्मिन्मराविव मरीचयः ॥२०॥

सती वाप्यसती ताप - नद्येव लहरी चला[१९] ।
मनसेवेन्द्रजालश्रीर्जगती प्रवितन्यते ॥२१॥
( योगवा० ३।१।१९ )

ब्रह्मणा तन्यते विश्वं मनसैव स्वयम्भुवा ।
मनोमयमतो विश्वं यन्नाम परिदृश्यते ॥२२॥

यो ह्यशुद्धमतिर्मूढो रूढो न वितते पदे ।
[२०]वज्रसारमिदं तस्य जगदस्त्यसदेव सत् ॥२३॥
( योगवा० ३।४२।१ )

अव्युत्पन्नस्य कनके कानके कटके यथा ।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥२४॥
( योगवा० ३।४२।५ )

तथाऽज्ञस्य[२१] पुरा - गार-नग-नागेन्द्रभासुरा ।
इयं दृश्यदृगेवास्ति न त्वन्या परमार्थदृक्" ॥२५॥
(योगवा० ३।४२।३)

---

१७. आकाशमिव व्यापकम् इत्यर्थः ।

१८. आत्मनः सर्वगत्वेऽपि बुद्धौ प्रतिबिम्बोदये एव चैतन्योपलब्धिर्नान्यत्रेत्यर्थः ।

१९. असतीव सती तोयनद्येव इति पाठो भ्रष्ट एव ।

२०. वज्रसारं स्थिरमित्यर्थः ।

२१. अत्र अज्ञः = चैतन्यसामान्यम् अधिष्ठानहेतुरूपेण यो न जानाति ।

इत्यादिवाक्यैर्वासिष्ठे नात्यन्तासत्यतोदिता[२२] ।
जगतोऽ[२३]परवाक्यैर्हि सत् कार्य्यं प्राकृतम् मतम् ॥२६॥
नामरूपविनिर्मुक्तं यस्मिन् सन्तिष्ठते जगत् ।
तमाहुः प्रकृतिं केचिन्मायामेकेऽपरे त्वणून् ॥२७॥
सुषुप्तावस्थया[२४] चक्र-पद्मरेखा शिलोदरे ।
यथा स्थिता चितेरन्तस्तथेयं जगदावली ॥२८॥
( योगवा० )
प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला[२५] ।
इत्यादिवाक्यैः साङ्ख्यीय-सत्कार्य्याद्युपवर्णनात्[२६] ॥२९॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः
सत्यत्वासत्यत्ववैधर्म्यपरिच्छेदः ।

— :***: —

---

२२. अत्यन्तासत्यता=मिथ्यात्वं यत् खलु त्रैकालिकनिषेधप्रतियोगिरूपमित्युच्यते ।

२३. अपरवाक्येतिशब्देन अग्रतः समुद्धृतानि वाक्यानि उच्यन्ते-नामरूपेति ( श्लो० २७ ) सुषुप्तावस्थयेति (श्लो० २८) च ।

२४. सुषुप्तावस्थेयं अनभिव्यक्तावस्था या टङ्कच्छेदात् प्राग् विद्यते ।

२५. इदमपि योगवासिष्ठ-वचनम् ।

२६. उक्तं च वासिष्ठे—फलपुष्पलतापत्रशाखाविटपमूलवान् । वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ( ३।१००।११ ); सूर्यकान्ते यथावह्निर्यथा क्षीरे घृतं तथा । तथेदं संस्थितं सर्वं देशकालक्रमोदये ॥ ( १।९।२७-२८ ) ।

## तृतीयः परिच्छेदः

तदेवमात्मनः सत्ता दर्शिताऽन्यविलक्षणा[1] ।
अथ चिद्रूपतां[2] वक्ष्ये बुद्धिवृत्तिविलक्षणाम् ॥१॥
अनुभूतिश्चिति[3] र्बोधो वेदनं चोच्यते पुमान् ।
वेद्यं जडं तमोऽज्ञानं प्रधानादिकमुच्यते ॥२॥
वेदनं वेद्यसम्बन्धादेव वेत्त्रभिधीयते ।
यथा प्रकाश्यसम्बन्धात् प्रकाशोऽपि प्रकाशकः ॥३॥
यथा वाऽर्थोपरागेण भानमर्थस्य भासकम् ।
एवं वेद्योपरक्तस्यास्यांशस्याऽऽधारताऽंशिनि ॥४॥
असङ्गायां चितौ वेद्योपरागोऽयं न धीष्विव ।
किन्तु साक्षाद् द्वारतो वा[4] चिति तत्प्रतिबिम्बनम् ॥५॥

---

१. अन्येभ्यः प्रधानादिभ्यो भिन्नेत्यर्थः । इयम् अपरिणामिनी सत्ता या पारमार्थिकीत्युच्यते ।

२. आत्मा चिदेव, चैतन्यमेव आत्मा पुरुषो वा, न पुनः 'चैतन्यलक्षणः पुरुष' इति कथनं तत्त्वतः सत्यं भवति । चैतन्यलक्षणः पुरुष इति गौणः प्रयोग इति मन्तव्यम् । तथा चोक्तं कैयटेन—तत्त्वाख्यानमपि लक्षणं भवति, यथा चैतन्यलक्षणः पुरुष इति भावः ( प्रदीप ३।२।१२६ ) । अत्राह नागेश उद्द्योते—तत्स्वरूपत्वात् पुरुषस्य यथा तत्र लक्षणत्वारोपेण शब्दप्रयोगस्तथाऽत्रापि तदारोपेण प्रत्यय इति भावः ।

३. चितिः चितिशक्तिरिति वा प्रयुज्यते योगशास्त्रे बहुशः । आह भाष्यविवरणकारः—चितिरेव शक्तिः चितिशक्तिः । यथा पच्यादयः शक्तयः शक्तिमदपेक्षाप्रापणीयजन्मानो न स्वयं शक्तयः, चितिः पुनः स्वयमेव शक्तिर्नार्थान्तरमपेक्षते तेन नित्यावस्थितत्वम् । चितिशब्दस्य चिन्मात्राभिधायिनः शक्तिशब्देन सामानाधिकरण्यमविकृतरूपाया एव चिते र्विषयित्व-प्रदर्शनार्थम् ( १।२ ) ।

४. बुद्धि-तद्वृत्ति-तदारूढ़-पदार्थानां साक्षात्, अपरेषां च प्रकृत्यादीनां वृत्तिद्वारा आत्मनि प्रतिबिम्ब-समर्पणरूप स्तदुपरागः संभवत्येवेत्यर्थः (विवेक०) ।

बाह्यं वृत्त्याख्यकरणाभावादनुपरागतः ।
चितिर्नैवेक्षते चेत्यं विभुत्वेऽपि च सर्वतः[५] ॥६॥
तथा चिदपि वृत्त्याख्य-करणाभावतोऽर्थवत् ।
स्वगोचरां वृत्तिमृते तिष्ठत्यज्ञातसत्तया[६] ॥७॥
तदेवं चिन्निराकारा प्रकाशाकाशरूपिणी ।
तिष्ठत्यव्यक्तरूपा च मोक्षादौ वृत्त्यभावतः[७] ॥ ८ ॥
बुद्धिवृत्तिस्तु[८] साकारा परिच्छिन्ना च दीपवत् ।
व्यक्ता च सर्वदा तद्वदसङ्ख्या क्षणभङ्गुरा ॥ ९ ॥
जड़ा च परदृश्यत्वाद् घटदीपादिवन्मता ।
वृत्तेः प्रकाशता[९] त्वर्थाकारत्वादक्षतैव हि ॥ १० ॥
यथाऽऽस्याकारतार्हत्वादादर्शस्तत्प्रकाशकः ।
सर्वाकारत्वयोग्यत्वात् सैवं सर्वप्रकाशिका ॥ ११ ॥
न पुनर्वृत्तिद्रष्टृत्वं चितस्तद्भिन्नद्रष्टृता ।
वृत्तेर्यतो गौरवं स्यात् तयोर्ज्ञातृत्वकल्पने[१०] ॥ १२ ॥

---

५. चेत्यम् = ज्ञेयम् । चितेर्विभुत्वेऽपि न सदा सर्ववस्तुमानं भवति अतो विषयावरकस्य तमसः सत्ता स्वीकार्या । यावत् तमसोऽपसारणं न भवति वृत्त्या, तावद् वस्तु-प्रकाशो न जायते ।

६. यतः स्वेन स्वस्य ग्रहणं न भवति, अत आत्मप्रकाशार्थं बुद्धौ ( = बुद्धि-परिणामभूतायां वृत्तौ ) आत्मप्रतिबिम्बोऽपरिहार्य इति तात्पर्यम् ।

७. ज्ञानरूप आत्मैव चित् । सा च ग्राह्यविषयाकारशून्या ।

८. वृत्तयोऽपि दीपशिखा इव द्रव्यरूपा भङ्गुराश्चित्तस्य परिणामा इति सांख्यीयं मतम् ( १।४ नागोजीभट्टवृत्तिः ) ।

९. प्रकाशता = विषयप्रकाशनकारित्वम् ।

१०. "वस्तुत आत्मन एव द्रष्टृत्वं न तु बुद्धिवृत्तौ तत् कल्पनीयम्, उभयत्र द्रष्टृत्व-कल्पने गौरवाद । तथा च आत्मन एव द्रष्टृत्वेन तद्विवेकः सुघट एव । 'चितो वृत्तिद्रष्टृत्वम्, वृत्तेस्तद्भिन्नद्रष्टृता पुनर्न' इत्यन्वयः" ( विवेक० ) । तयोः = वृत्तेरात्मनश्च ।

बुद्धयारूढं त्वन्यवस्तु तद्द्वारा प्रतिबिम्बितम् ।
पश्यत्यनुभवो नान्यो द्रष्टा बुद्ध्यादिकोऽखिलः[११] ॥ १३ ॥
इत्येवं बुद्धिवृत्तिभ्यो वैलक्षण्यं चितीरितम् ।
चिदचित्त्वाख्यवैधर्म्यं देहादिभ्यः स्फुटन्त्विदम् ॥ १४ ॥
अन्यो[१२]ऽन्यप्रतिबिम्बेन सारूप्याद् वृत्तिबोधयोः ।
बोधव्यवहृतिर्वृत्तौ लोहेऽग्निव्यवहारवत्[१३] ॥ १५ ॥
नैवाल्पबुद्ध्या शक्योऽयं विवेको वृत्तिबोधयोः[१४] ।
तार्किका यत्र सम्मूढाः साङ्ख्यानां श्रेष्ठता यतः ॥ १६ ॥
विज्ञानवादिनो बौद्धा वृत्तिबोधाविवेकतः ।
ज्ञानात्मत्वश्रुतौ मूढा मेनिरे क्षणिकां चितिम्[१५] ॥ १७ ॥
सत्त्वपुंसो विवेकोऽयं वृत्तितद्बोधरूपयोः[१६] ।
नाशक्यः सुधियां यद्वद्धंसानां क्षीरनीरयोः ॥ १८ ॥
एतदन्तश्च[१७] संसारो मोक्षस्तत्रैव संस्थितः ।
यद्वृत्तिभ्यो विवेकेन तद्बोधस्यावधारणम् ॥ १९ ॥

---

११. बुद्धिवृत्तिद्वारा स्वात्मनि प्रतिबिम्बितं यद् वस्तु तदेव पश्यति आत्मानुभवरूपः । जडो बुद्धयादिको न पश्यति—इति तात्पर्यम् । अन्यवस्तु = अनुभवरूपात्मभिन्नम् ।

१२. अन्योन्यप्रतिबिम्बेन=वृत्तेरात्मनश्च परस्पर - प्रतिबिम्बेन । वृत्तिबोधयोः= वृत्ति–चितोः । वृत्तौ चैतन्यरूपताव्यवहार औपाधिक एव ।

१३. द्र०सांख्यसू० अन्तःकरणस्य तदुज्ज्वलितत्वाल् लोहवदधिष्ठातृत्वम् (१।९९) ।

१४. यथोक्तं व्यासभाष्ये—तदेतच् चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमपि अविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते । तदनेन चित्तसारूप्येण भ्रान्ताः केचित् तदेव चेतनमित्याहुः ( ४।२३ ) ।

१५. चितिम्=ज्ञानरूपमात्मानम् ।

१६. योगसू० ४।१९–२४ द्र० । अत्र चित्त-पुरुषयोर्विवेको युक्त्या स्थापितः ।

१७. एतदन्तः=विवेकज्ञानपर्यवसानः ।

सर्वोऽप्यनुभवं वेद न कश्चिदपि वेद ताम्[१८] ।
विवेकमात्रमस्मिन् हि भासमानेऽप्यपेक्षते ॥ २० ॥
आत्मा विवेक्तुं बाह्यार्थे न शक्यो वृत्तिमिश्रणात् ।
अतो वृत्तौ विवेक्तव्यो वृत्तिबोधतयैव सः ॥ २१ ॥
यथा बुद्ध्या विवेकार्हो नाग्निरङ्गारमिश्रणात् ।
सोऽङ्गारे तु विवेकार्हो काष्ठदग्धृतया स्फुटम् ॥ २२ ॥
अत एव श्रुतौ स्वप्ने दृश्यवृत्तिविवेकतः ।
स्वयंज्योतिःस्वरूपेण[१९] तस्या द्रष्टा प्रदर्शितः[२०] ॥ २३ ॥
साक्षात् प्रकाशो यो यस्य स तद्भिन्नो मतो बुधैः ।
घटादिभ्यो यथाऽऽलोक आलोकाच्चापि वृत्तयः[२१] ॥ २४ ॥
वृत्तेः साक्षात् प्रकाशत्वादतोऽनुभवरूपकः ।
वृत्तिभ्यो भिन्न आत्मेति शीघ्रो मार्गः स्वदर्शने ॥ २५ ॥

---

१८. वेदनाम् इत्यपपाठः । ताम्=वृत्तिम् अनुभवरूपेण आत्मना असंभिन्नाम् । अस्मिन्=आत्मनि अनुभवरूपे । "यदि अनुभवरूप आत्मा वृत्तिश्च पृथगेव न स्यातां तर्हि यदा यदानुभवस्य वेदनं तदा तदा वृत्तेरपि वेदनं शुद्धतयापद्येत" ( सार० ) ।

१९. द्र० सन्ध्यं तृतीयं स्वप्नस्थानं………स्वप्ने ज्योतिषा प्रस्वपिति । अत्रायं पुरुषः स्वयंज्योतिर्भवति ( बृहदा० ४।३।९ ) ।

२०. 'स्वप्नावस्थायां बाह्यपदार्थसम्बन्धविरहाद् बुद्धिवृत्तिरेव दृश्यत्वाद् आत्मनश्च द्रष्टृत्वाद् दृश्यद्रष्टृरूपवैधर्म्येण बुद्धिवृत्ते रात्मनि द्रष्टरि भेदग्रहः सुघट एवेति भावः' ( सार० ) ।

२१. आत्मा बुद्धिवृत्तितः पृथगिति येनानुमानेन साधितं तत्र पूर्वभागे द्वितीयाध्याये प्रदर्शितम् ।

एवमादिप्रकारेण बुद्धिसत्त्वप्रकाशतः ।
विलक्षणतया[२२] सिद्धश्चित्प्रकाशोऽस्य भासकः ॥ २६ ॥
स्वप्नदेहादिदृष्टान्तैस्तस्माच्छ्रुत्यादिदर्शितैः ।
जाग्रद्देहेन्द्रियार्थेभ्यश्चितिर्भिन्नतया मता ॥ २७ ॥
स्वप्ने देहादिकं सर्वं चिद्भिन्नं चिति भासते ।
जाग्रत्येवं विशेषस्तु यद् बाह्यमपि भासते[२३] ॥ २८ ॥
स्वप्ने मनोमयत्वाच्च साक्षाच्चिद्विषयोऽखिलम् ।
करणद्वारतो[२४] बाह्यं चितो जाग्रति गोचरः ॥ २९ ॥
सर्वं देहादिकं स्वप्न - जाग्रतोरेकरूपतः ।
भाति चिद्व्योम्नि नात्रार्थ-बाह्यान्तर्भेदतो भिदा ॥ ३० ॥
चिद्व्योम्नि वासनातो धीः प्रमाणाद् वाऽर्थरूपिणी ।
ततश्चितोऽर्थभानं यत् तत् समं स्वप्नजाग्रतोः[२५] ॥ ३१ ॥
तदिदं स्वानुभूत्यैव प्रोच्यते न परोक्षतः ।
स्वप्नदृष्टान्तसदृशो नोपायोऽस्त्यात्मदर्शने ॥ ३२ ॥

---

२२. बुद्धि-पुरुषयोर्भेदो व्यासभाष्ये दर्शितो युक्तिभिः; तद्यथा—"( १ ) ज्ञाताज्ञातविषयत्वात् परिणामिणी हि बुद्धिः······सदाज्ञातविषयत्वं तु पुरुषस्य; (२) परार्था बुद्धिः संहत्यकारित्वात्, स्वार्थः पुरुष इति; (३) सर्वार्थाध्यवसायकत्वात् त्रिगुणा बुद्धिस्त्रिगुणत्वादचेतनेति, गुणानां तूपद्रष्टा पुरुष इति" ( २।२० )।

२३. स्वप्ने जाग्रति च उभयत्राहंरूपेण आत्मनि सदा विद्यमानेऽपि स्वप्नदेहादीनां व्यावृत्तिर्दृश्यते, अतो देहादिभ्य आत्मनो भेदः सिध्यति । यथा स्वप्ने तथा जाग्रति वस्तुभानस्य विशेष एव । जाग्रति तु बाह्यवस्तुनो भानं भवति-इत्ययं विशेषः ।

२४. अत्र करणपदेन वृत्तिर्ग्राह्या ।

२५. स्वप्नावस्थायां संस्कारहेतुका बुद्धिर्भवति अर्थाकारा; जाग्रति पुनः प्रमाणहेतुका । अर्थभानं तु उभयत्रैकरूपमेव ।

सुषुप्तौ हि यथा स्वप्ने स्वात्मन्येवेक्षतेऽखिलम् ।
आत्मानं चैकदेशस्थं मन्यते जागरे तथा ॥ ३३ ॥
सुषुप्तिरात्मनस्तत्त्वं स्वरूपावस्थितेस्तदा ।
जाग्रत्स्वप्नौ मायिकौ तु मृषा सारूप्यतो धिया[२६] ॥ ३४ ॥
बुद्धेः सुषुप्तिस्तमसाऽऽवरणं[२७] तद्विलक्षणा ।
चितेः सुषुप्तिर्वृत्त्याख्य-दृश्यावरणशून्यता ॥ ३५ ॥
पूर्णः कूटस्थनित्यश्च [२८]स्वस्वधीमात्रवृत्तिदृक्[२९] ।
वृत्त्याख्यदृश्यविरहात् सर्वदा नेक्षते पुमान् ॥ ३६ ॥
वृत्तिदेशे यथा बोधस्तथा सर्वत्र सर्वदा ।
वृथैव तप्यते मूढैर्व्ययनाशादिनाऽऽत्मनः ॥ ३७ ॥
दुःखभोगमहारोग-निदानं देहगेहिनी ।
बुद्धिर्न त्यज्यते मूढैर्महानिद्रासुखं यतः[३०] ॥ ३८ ॥
अनादिबुद्धिगार्हस्थ्यं विवेकात्त्यज्यते न चेत् ।
[३१]न मोक्षो बाह्यसंन्यासादिहामुत्रासुखं परम् ॥ ३९ ॥

---

२६. सुषुप्तौ आत्मा स्वरूपावस्थितो भवति अतोऽवस्थेयममायिकी । मृषासारूप्यतः= बुद्धितत्त्वेन सह मिथ्याभूताभेदज्ञानात् ।

२७. यथा बुद्धेः सुषुप्तिर्भवति, तथात्मनश्च । दृश्यावरणशून्यतैवात्मनः सुषुप्तिः ।

२८. स्वस्वधीमात्रेति कथनेन बुद्ध्यन्तरदर्शनं व्यावर्त्यते ।

२९. अत्र भाष्यविवरणोक्तं द्रष्टव्यम्—बुद्धिं वृत्तिरूपेण परिणतां बुध्यते इति बुद्धेर्बोद्धा पुरुषः । तद्बोधनमेव पुरुषस्य स्वं रूपम्, नान्यो बोद्धा, नान्यद् बोधनम् । बोद्धुश्च बोधनादन्यत्वे सति विक्रियात्मकता स्यात्, ततश्च दर्शितविषयत्वं च न स्यात्, तथा च करणान्तरापेक्षित्वं पुरुषस्य प्रसज्येत । तस्माद् बोधनं बोद्धृत्वं चोपचरितं तद्वृत्तिसारूप्येण ( १।३ ) । 'प्रत्यक् स्वबुद्धिं चेतयते इति प्रत्यक्-चेतन आत्मा' इति विवरणकारः ( १।२९ ) ।

३०. अत्रेदं विज्ञेयं यद् 'बुद्धिरात्मानं दुःखम् अनुभावयति, न तु वस्तुतोऽपि आत्मनो दुःखसत्त्वमिति भावः' ( सार० ) ।

३१. अतएवोपादानतुष्टिर्हेयेति प्राञ्चः ।

समचिन्मात्ररूपेषु स्वपरात्मसु सर्वदा ।
बुद्धिमात्रविवेकेन स्वपरादिभिदा मृषा[३२] ॥ ४० ॥
चिन्मात्रे निर्गुणे स्वामिन्यारोप्यैवात्मकर्तृताम् ।
स्वाम्यवज्ञापराधेन बध्यते धीः स्वकर्मभिः ॥ ४१ ॥
साध्वी तु धीः पतिं दृष्ट्वा याथातथ्येन तत्परा ।
इहानन्दमयी चान्ते पतिदेहे लयं व्रजेत्[३३] ॥ ४२ ॥
नाहं कर्त्ता सुखी दुःखी चिन्मात्राकाशरूपकः ।
एवं नाथं चिन्तयन्ती न पत्युर्दुःखभागदा ॥ ४३ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोश्चिदचित्त्ववैधर्म्य-परिच्छेदः ।

—: ०० :—

## चतुर्थः परिच्छेदः

इत्येवमात्मनः प्रोक्तो बुद्ध्यादिभ्यो विलक्षणः ।
चित्प्रकाशोऽधुनाऽऽनन्द-रूपता[१] वक्ष्यते तथा[२] ॥ १ ॥

---

३२. "असंगस्य चिन्मात्रस्वरूपस्य आत्मनः स्वीयत्वाद्यभावेन तादृशविज्ञानं भ्रम एवेति भावः" ( सार० ) ।

३३. पतिदेहे = आत्मस्वरूपे स्वामिशरीरे च; लयं व्रजेत् = बुद्धिः लयं प्राप्नुयात्, मृतपतिदेहेन सह स्वदेहनाशो भवेदग्निना ।

१. अत्र आनन्दरूपतेति-शब्देन दुःखाभावरूपतेष्यते ।

२. मोक्षरूपमात्मस्वरूपं शान्त्यात्मकमिति सांख्यनयः, न तत्र बौद्धस्यानन्दस्य सत्ताऽभ्युपगन्तव्या । शान्तिरेव सुखमिति कृत्वा सुखात्मक आत्मा ( =शान्त-वृत्तिकस्य चित्तस्य उपद्रष्टा कूटस्थ आत्मा ) इति कथयितुं शक्यते । अनया दृशैव देवलोक्तिः संगच्छते—स तथा निवृत्तो निर्गुणः छिन्नबन्धो जन्म-जरामरणदुःखविमुक्तः…"सत्त्वादिहीनः तन्मात्रावस्थितः परमसुखमैकान्ति-कमधिगच्छतीति सांख्यम् ।

दुःखं कामसुखापेक्षा सुखं दुःखसुखात्ययः ।
( भाग० ११।१६।४१ )
इति स्मृतेः सुखात्मत्वं नित्यनिर्दुःखताऽऽत्मनः ॥ २ ॥
परिभाषाबलाद् रूढि-बाधः[3] सर्वत्र सम्मतः ।
अन्यथा परिभाषेयं मोक्षशास्त्रे भवेद् वृथा ॥ ३ ॥
यद्वा परोक्षवादेन परमप्रियताऽऽश्रये ।
रूपिका सुखगीः पुंसि विभुत्वाप्त्यै खशब्दवत्[4] ॥ ४ ॥
नानन्दं न निरानन्दमित्यादिश्रुतिभिः[5] स्फुटम् ।
आत्मन्यानन्दरूपत्वं-निषेधाद्[6] युक्तिसंयुतात् ॥ ५ ॥
[7]उपासाद्यर्थशून्यत्वान्नेति नेति श्रुतेस्तथा[8] ।
निषेधवाक्यं बलवद् विधिवाक्यादिति स्थितिः[9] ॥ ६ ॥

---

३. परिभाषा = आधुनिकसंकेतः । "सावकाशनिरवकाशयोर्निरवकाशविधेर्बलीयस्त्वान् निरवकाशा परिभाषा बलीयसी" इति परिभाषया रूढेरवश्यं बाधनं स्यादेवेति ( सार० ) ।

४. परोक्षवादेन = अप्रत्यक्षवाक्येन । यथा खं ब्रह्मेति श्रुतिवाक्ये खत्वस्य ( =आकाशत्वस्य ) आरोपः क्रियते ब्रह्मणि तस्य विभुत्वलाभाय, तथा दुःखाभावात्मके आत्मनि सुखरूपतारोप्यते, यथा निरतिशया प्रीति रात्मनि स्याज् जनानां सुखासक्तचित्तानाम् इति तात्पर्यम् । मुखे चन्द्रत्वस्येव आत्मनि सुखत्वस्यारोपः । रूपिका = आरोपप्रतिपादिका ।

५. महोपनिषद् ५।१८ ।

६. मोक्षे आत्मनः सुखरूपत्वमभिव्यज्यते—इति मतं न्यायभाष्येऽपि खण्डितम् ( १।१।२२ ) । योगसारसंग्रहग्रन्थान्तेऽपि नित्यानन्दावाप्तिरूपो मोक्षः खण्डितो भिक्षुणा; भोजेनापि योगवृत्त्यन्ते ।

७. उपासनादिप्रयोजनशून्यत्वादित्यर्थः । आत्मनि आनन्दाभावरूपत्वमुपासनार्थं कल्पितमिति वक्तुं न शक्यते ।

८. बृहदा० २।३।६

९. विधिवाक्यं भावबोधकं वाक्यम्; तच्च अन्यथापि नेतुं शक्यते । निषेधवाक्यम् अभावबोधकं वाक्यम, तद् अन्यथा नेतुमशक्यम् ।

निर्निरानन्दमिति च स्वोपाध्यानन्दभोक्तृताम् ।
स्वामित्वरूपिणीं वक्ति न निर्धन इतीव हि[१०] ॥ ७ ॥
प्रेयोऽन्यस्माच्च सर्वस्मादिति श्रुत्या[११] सुखादपि ।
उक्त आत्मा प्रियस्तस्य सुखत्वोक्तिश्च नोचिता ॥ ८ ॥
'आनन्दाद्याः प्रधानस्य' इति[१२]वेदान्तसूत्रतः ।
वेदान्तेऽपि न सिद्धान्त आत्मनः सुखरूपता ॥ ९ ॥
विस्तराद् ब्रह्ममीमांसा-भाष्येऽस्माभिः[१३] परीक्षितम् ।
चितेरसुखरूपत्वं प्रेमा व्याख्यायतेऽधुना ॥ १० ॥
मा न भूवमहं शश्वद् भूयासमितिरूपकः ।
[१४]निर्निमित्तोऽनुरागो यः स प्रेमा परमश्रितिः ॥ ११ ॥
अन्याशेषतया बुद्धेः स्नेहोऽयं न सुखेष्वपि ।
अतः प्रियतमः स्वात्मा नान्योऽतो ह्यधिकः प्रियः[१५] ॥१२॥
आत्मत्वेनात्मनि प्रेमा न सुखत्वाद्यपेक्षते ।
अहं स्यामिति चेद् यस्मात् सुखं स्यामिति नेष्यते[१६] ॥१३॥

---

१०. "यथा न निर्धनमितिशब्दाद् धनस्वामित्वं बोध्यते, नतु धनाभावाभावः, एवं निर्निरानन्दमिति श्रुतेरपि आत्मनि स्वोपाधिबुद्ध्यादिगतस्य आनन्दस्य स्वामित्वरूपं भोक्तृत्वं बोध्यते, न तु आनन्दाभावाभाव इत्यर्थः" (विवेक०)।

११. बृहदा० ४।५।६

१२. ब्रह्मसू० ३।३।११; प्रधानस्य = प्रकृतेः ।

१३. विज्ञानामृतभाष्ये ( प्रथमसूत्र-व्याख्यानान्ते ) ।

१४. निर्निमित्तः=अनौपाधिकः, स्वाभाविकः ।

१५. अन्याशेषतया=अन्यानधीनतया । स्नेहः = मा न भूवं हि भूयास मित्येवंरूपा प्रीतिः । स्नेहोऽयं सुखेष्वपि न भवति, यतः 'मम सुखं भवतु' इत्येव लौकिकाः कथयन्ति, न पुनरहं सुखं स्यामिति । अत आत्मन्येव निरुपाधिकी प्रीतिर्भवतीति ज्ञेयम् ।

१६. आत्मनि यः प्रेमा तत्र यदि सुखत्वं प्रयोजकं स्यात् तर्हि 'सुखमहं स्याम्' इत्येवेष्येत ।

तथा च सुखतादुःखाभावते वाऽत्मताऽपि च ।
प्रेम्णि प्रयोजिका सिद्धा स्वतः प्रेमात्मतैव[१७] तु ॥ १४ ॥

तस्माद् वस्तुत आत्मैव प्रियो नौपाधिकत्वतः ।
औपाधिकीतरप्रीतिरस्थिरत्वान्न तात्त्विकी ॥ १५ ॥

प्रीतिरन्यत्र चानित्याऽविवेकाद्यैः सुखादिषु ।
आत्मप्रीतिस्तु नित्याऽतो नित्यानन्दः पुमान् मतः ॥ १६ ॥

आत्मनः प्रियतां बुद्धिर्यदि पश्येत् समाहिता[१८] ।
सर्वातिशायिनीं तर्हि सुखाब्धौ किं न मज्जति ॥ १७ ॥

प्रियदर्शनतो बुद्धेः सुखं लोकेषु दृश्यते ।
अतोऽनुमेयं परम-प्रियदृष्ट्या परं सुखम् ॥ १८ ॥

आत्मार्थत्वेन सर्वत्र प्रीतिरात्मा स्वतः प्रियः ।
इति शश्वच्छ्रुतिः[१९] प्राह आत्मदृष्टिविधित्सया[२०] ॥ १९ ॥

---

१७. स्वतः प्रेमा=अन्यानपेक्षप्रियता ।

१८. आत्मनः सर्वप्रियत्वादेव बुद्धिः पुरुषख्यातिं लब्ध्वा गुणेभ्यो विरक्ता सती पुरुषालम्बना, अतिस्थिरा च भवति, अतएव आत्मख्यातिमतो योगिनो मनो बाह्यार्थशून्यं जायते । अत्रेमानि वचांसि द्रष्टव्यानि—यदा कर्मगुणैर्हीना बुद्धिर्मनसि वर्तते । तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ ( शान्ति० २०५।१० ); यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् । तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ ( शान्ति० २०५।१३ ); यच्छेद् वाङ्मनसी बुद्ध्या य इच्छेज् ज्ञानमुत्तमम् ॥ ज्ञानेन यच्छेदात्मानं य इच्छेच् छान्ति-मात्मनः । ( शान्ति० २३६।४–५ ) । अन्तरात्मनि संलीय मनःषष्ठानि मेधया । इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयन् ॥ ध्यानेनोपरमं कृत्वा विद्यासंपादितं मनः । अनीश्वरः प्रसन्नात्मा ततोऽर्च्छत्यमृतं पदम् ॥ ( शान्ति० २४६।६–७ ) ।

१९. द्र० बृहदारण्यकम् ४।५।६ ।

२०. श्रुतौ क्वचिद् आत्मनः सुखरूपतोक्ता । तत्र आत्मा स्तूयते, आत्मसाक्षात्कार-विधानेच्छया, न तु तत्र आत्मनः सुखरूपता प्रतिपाद्यते—इति तात्पर्यम् । "यत आत्मा स्वतः प्रियः, अन्यप्रीतिश्चात्मार्थिका—इत्यत आत्मज्ञानं सम्पादयितव्यमिति भावः" ( सार० ) ।

ततोऽप्यनुपमं ज्ञेयं प्रियात्मेक्षणतः सुखम् ।
भुञ्जते तत् सुखं धीरा जीवन्मुक्ता महाधियः ॥ २० ॥
अन्तरात्मसुखं सत्यमविसंवादि योगिनाम् ।
अपश्यन् कृपणो बाह्य-सुखार्थी वञ्चितो जनः ॥ २१ ॥
सुखाशया बहिः पश्यन् देही हीन्द्रियरन्ध्रकैः ।
वातायनैर्गृहीत्वाऽन्तः सुखं वेत्ति न बाह्यदृक् ॥ २२ ॥
दुःखलभ्यान् दुःखमयान् परिणामेऽतिदुःखदान् ।
विषयोत्थान् सुखाभासान् धिक् स्वात्मसुखरोधकान् ॥ २३ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः प्रियाप्रियत्ववैधर्म्यपरिच्छेदः ।

—: ** :—

## पञ्चमः परिच्छेदः

परिच्छेदत्रयेणोक्तं सच्चिदानन्दरूपकम्[1] ।
मीयमानं श्रुतिस्मृत्योरात्मनो लक्षणत्रयम् ॥ १ ॥
तद्वैपरीत्यमन्येषां लक्षणञ्चेरितं स्फुटम् ।
आभ्यान्तु गुणदोषाभ्यां विवेको दोषहृत् परः ॥ २ ॥
नैर्गुण्यसगुणत्वादि - वैधर्म्याण्यपराण्यपि ।
बहूनि वक्ष्ये संक्षेपात् पुम्प्रकृत्योरतः परम् ॥ ३ ॥
धियोऽर्थाकारया वृत्त्या जनितत्वात् सुखादयः ।
[2]सामानाधिकरण्येन कल्प्यन्ते लाघवाद् धियाम् ॥ ४ ॥

---

१. द्वितीयपरिच्छेदे आत्मनः सद्रूपत्वम्, तृतीये तस्य चिद्रूपत्वम्, चतुर्थे तु आनन्दरूपत्वं प्रतिपादितम् ।

२. 'कार्यकारणयोः सामानाधिकरण्य-न्यायेन बुद्धिवृत्तिरूपकारणस्य बुद्धिनिष्ठत्वात् तज्जन्यसुखादीनामपि बुद्धिनिष्ठत्वमेव युक्तं न तु आत्मनिष्ठत्वम्"; "सुखादीनाम् आत्मोपादानकत्वे आत्ममनस्तत्संयोगानां त्रयाणां कारणत्वं कल्पनीयम्, तदपेक्षया एकस्यैव मनसः कारणत्वकल्पने लाघवादित्यर्थः" ( विवेक० ) ।

महदादेर्जडत्वेन तद्धेतुश्च जडो मतः ।
कार्य्यकारणसाजात्यं[3] दृष्टं लोके हि सर्वतः ॥ ५ ॥
अत आत्मा बोधमात्र-तया सिध्यति[4] लाघवात्[5] ।
गुणाः सर्वे प्रकृत्यादेर्विकाराश्चेतरेऽखिलाः ॥ ६ ॥
आत्मा तु निर्गुणस्तद्वत् कूटस्थश्च मतो बुधैः ।
चितेः कूटस्थसंज्ञा[6] तु स्थिरत्वाद् गिरिकूटवत् ॥ ७ ॥
लेपश्चेतरसम्बन्धे तद्रूपैरुपरक्तता[7] ।
यथा विषयसम्बन्धाद् बुद्धौ भवति वासना ॥ ८ ॥
भाण्डादौ द्रव्ययोगाच्च तत्तद्द्रव्यस्य वासना ।
लेपहेतुश्च सम्बन्धः सङ्गः सम्बन्धि चाञ्जनम् ॥ ९ ॥
अतो निरञ्जनोऽसङ्गो निर्लेपश्चोच्यते पुमान् ।
नभःपुष्करपत्रादि-दृष्टान्तैः परमर्षिभिः[8] ॥१०॥
चिन्मात्रानन्तशक्त्यब्धौ पुमर्थपवनेरिताः ।
सत्त्वादिशक्तयो यान्ति विश्वबुद्बुदरूपताम् ॥११॥

---

३. कार्यस्य उपादानकारणस्य चैकजातीयत्वम् ।

४. प्रश्नोपनिषद्भाष्ये ( ६।२ ) इदं युक्तिभिरुपपादितम् ।

५. "आत्मनः ज्ञानकारणत्वकल्पनापेक्षया ज्ञानस्वरूपत्वकल्पने कार्यकारणभावादिगौरवपरिहाराद् अस्य पक्षस्य लघुत्वात्" ( विवेक० ) ।

६. कूटस्थशब्दविषये द्र०"कूटमयोघनं तद्वत् तिष्ठतीति कूटस्थम्" (पस्पशाह्निक, उद्द्योत); "दृश्यमानगुणमन्तर्दोषं वस्तु कूटम्......तस्मिन् कूटे स्थितं तदध्यक्षतया, अथवा राशिरिव स्थितं कूटस्थम् (गीता १२।३ शां० भा०) ।

७. तद्रूपैः = इतररूपैः । वासना = उपरागः ।

८. कपिलासुरिसंवादे पठ्यते—व्यतिरिक्तं नाम आसुरे पुरुषः पञ्चविंशकः क्षेत्रज्ञः, यथा पुष्करपर्णस्थो बिन्दुर्न श्लेषमुपगच्छति अन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः । यथा मुञ्जादिषीका निष्कृष्टा न पुनराविशति अन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः । यथोदके प्रवर्तमाने मत्स्यो न प्रवर्तंतेऽन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः...तथा अन्यत् क्षेत्रम् क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः (शान्तिपर्व) ।

अत ईशश्चिदात्मैव जगतः सन्निधानतः ।
मणिवत्[9] प्रेरकत्वेन जडानामयसामिव[10] ॥१२॥
पुमानेव जगत्कर्त्ता जगद्धर्त्ताऽखिलेश्वरः ।
स्वाम्यर्थे भृत्यवद्[11]यस्माज्जडवर्गः प्रवर्त्तते ॥१३॥
करणानि च देहेषु राजार्थमधिकारिवत् ।
भोग्यजातं मनोमन्त्रिण्यर्पयन्ति स्वभावतः ॥१४॥
तैर्भोग्यैर्युक्तमात्मानमावेदयति धीश्चितिं ।
[12]इच्छामात्रेण तद् भुङ्क्ते राजेवात्माखिलेश्वरः ॥१५॥
धनादेरीश्वरो देहो देहस्येन्द्रियमीश्वरम् ।
इन्द्रियस्येश्वरी बुद्धिर्बुद्धेरात्मेश्वरः परः ॥१६॥
कूटस्थस्येश्वरस्यान्यो नास्ति प्रेरक इत्यतः ।
ईश्वरस्यावधित्वेन द्रष्टा वै परमेश्वरः ॥१७॥
अन्यस्यागन्तुकैश्वर्यं वहुव्यापारसङ्कुलम् ।
निर्व्यापारस्य निर्दोषमनाद्यैश्वर्यमात्मनः ॥१८॥
सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवः ।
संसारं तन्निवृत्तिञ्च माययाऽप्नोति हेलया ॥१९॥
सर्वातिशायि निर्दोषमैश्वर्य्यमिदमात्मनः ।
पश्यतो योगिनो ब्राह्मम्प्यैश्वर्यं तृणायते ॥२०॥
बाह्यस्यात्मोच्यते देहो देहस्यात्मेन्द्रियाणि च ।
बुद्धिरात्मेन्द्रियान्तस्य बुद्धेरात्मा तु चिन्नभः[13] ॥२१॥

---

९. तत्सन्निधानादधिष्ठातृत्वं मणिवत् ( सांख्यसू० १।९६ ) ।
१०. जडस्येति वचनव्यत्ययेन जगत इत्यस्यापि विशेषणम्' (सार०) ।
११. भृत्यदृष्टान्तः सांख्यसूत्रे उपलभ्यते—द्र० बहुभृत्यवद् वा प्रत्येकम् (२।४), गर्भदासवत् (३।५१), भृत्यवत् (३।६१) इति ।
१२. ईच्छामात्रेण=साक्षित्वमात्रेण ।
१३. अत्र नभः-पदेन चितेर्व्यापकत्वं व्यज्यते ।

अत आत्मावधित्वेन[14] परमात्मोच्यते चितिः ।
तथाऽन्तःकरणैर्योगाज्जीव इत्युच्यते[15] चितिः ॥२२॥
अविद्याकार्य्यरहितः परमात्मेति[16] च स्मृतिः ।
यस्य यद् व्यापकं तस्य तद् ब्रह्माऽतो धरादिकम् ॥२३॥
प्रकृत्यन्तं भवेद् ब्रह्म स्वस्वकार्य्याद्यपेक्षया[17] ।
सेश्वरे साङ्ख्यवादेऽपि[18] चितेरेवानुमन्यते ॥२४॥
परे वा परमात्मत्वादिकन्तु न जडे क्वचित् ।
अव्यक्तव्यापकत्वाभ्यां परं ब्रह्म तु चेतनः ॥२५॥
तस्याऽव्यक्तं व्यापकञ्च न हेतुविषयाऽस्ति हि[19] ।
असङ्ख्यात्मा नभोराशिरविभक्तैकरूपकः ॥२६॥
सो[20]ऽतश्चिद्घनविज्ञान-घनात्मघनसंज्ञकः ।
प्रकाशस्यानपेक्षत्वात् स्वस्य द्रष्टृतयाऽपि च ॥२७॥

---

१४. "आत्मावधित्वेन=आत्मनां सीमात्वेन, ततः परस्य आत्मनोऽभावादिति भावः" ( सार० ) ।

१५. द्र० सांख्यसू० 'विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्' (६।६३) ।

१६. आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः । तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥ (शान्ति० १८७।२३; श्वेताश्वतरभाष्ये उद्धृतश्च) ।

१७. "धरादिरूपस्थूलकार्यापेक्षया तन्मात्रादीनां ब्रह्मत्वं तेषां तद्व्यापकत्वात् कारणेषु कार्याणां सत्ताया बृहत्तरत्वापेक्षत्वात् तत्र तत्र ब्रह्मत्वम् । चितेरेव आत्मन एव परब्रह्मत्वमिति शेषः" ( सार० ) ।

१८. सांख्यं सेश्वरं निरीश्वरं चेति द्विविधमिति केचन ( द्र० ललितासहस्रनामभाष्य पृ० ६३ ) । ईश्वरता नाम बुद्धिधर्मोऽतः 'सांख्यं निरीश्वरम्' इति कथनं वाङ्मात्रमेव ।

१९. अतएव तस्य न कश्चित् प्रकाशको भवति, तस्माद् व्यापकतरो वा ।

२०. इत आरभ्य कैश्चिच् श्लोकैः प्रतिपाद्यते यदयमात्मा चिद्रूपः, स्वप्रकाशः, गौणभोक्ता, साक्षी च; बुद्धिः पुनः मुख्यभोक्त्री, अनित्या च ।

स्वप्रकाशः पुमानुक्त इतरे तद्विलक्षणाः ।
भोगोऽभ्यवहृतिः सा च कूटस्थे नास्ति धीष्विव ॥२८॥
धीवृत्तिप्रतिबिम्बाख्य-गौणभोगा तु भोक्तृता[२१] ।
साक्षाद् धीवृत्तिद्रष्टृत्वाद् बुद्धिसाक्ष्युच्यते पुमान्[२२] ॥२९॥
विना विकारं द्रष्टृत्वात् साक्षी तूक्तोऽखिलस्य सः ।
चेत्योपरागरूपत्वात् साक्षिताऽप्यध्रुवा चितः[२३] ॥३०॥
उपलक्षणमेवेदमपि व्यावृत्तये जडात् ।
अतः पुमाननिर्देश्योऽणुश्च सूक्ष्मश्च कथ्यते[२४] ॥३१॥
विना दृश्यमदृश्यत्वादव्यक्तश्चोच्यते स्वतः ।
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना ।
अदृश्यं चाऽऽस्यमादर्शे चित् तथा स्वस्वबुद्धिषु[२५] ॥३२॥
चिति बिम्बस्य सङ्गश्चेद् विश्वं भासेत सर्वदा ।
विश्वाधारोऽप्यतः शून्य मिति चिद् गीयते खवत्[२६] ॥३३॥
दृश्यदोषान् मृषा बुद्धि र्दृष्टर्य्यारोप्य निर्मले ।
आदर्शे मलवद् व्योम्नि दोषदृष्ट्या तु तप्यते ॥३४॥

---

२१. बुद्धिवृत्ति-प्रतिबिम्बितं गौणभोगमादायात्मनो भोक्तृत्वम्; मुख्यदृष्ट्या आत्मा भोक्ता न ।

२२. तु० बुद्धिबोधात्मा पुरुषः ( व्यासभाष्य १।४ ) पुरुषो बुद्धेः प्रतिसंवेदीति सांख्यमतममुमेवार्थं पुष्णाति ।

२३. आत्मनो यत् साक्षित्वम् ( इदमेव द्रष्टृत्वमित्युच्यते ) तदनित्यम्, यत इदं विषयसंबन्धाश्रितम् । आत्मा स्वरूपतो दर्शनरूपः=ज्ञानरूपः ।

२४. आत्मा स्वरूपतो निर्धर्मकः; महदादिप्राकृतवस्तूपलक्षितं तस्य शक्तिमत्तादिकमिति विज्ञेयम् ।

२५. दृश्यया बुद्ध्या सह संबन्धो यदि न स्यात् तर्हि आत्मा अज्ञेयः स्यात् । अज्ञेयत्वाद् अव्यक्तोऽयमित्युच्यते । विशेषकमिदं पद्यम् ।

२६. "व्यापकस्याकाशस्यासंख्यवस्त्वाधारत्वेऽपि वस्तुसंबन्धकृतविशेषाभावेन यथा शून्यमिति तस्य संज्ञा तद्वत्" ( सार० ) ।

वस्तुतश्चिति नास्त्येव मलो दृश्याश्रितः सदा ।
अतश्च निर्मलः स्वस्थो निर्दोषश्चोच्यते पुमान् ॥ ३५ ॥
सजातीयेषु वैधर्म्य-लक्षणा[२७] नास्ति यद् भिदा ।
अत आत्मा समः प्रोक्त ऐकरूप्याच्च सर्वदा ॥ ३६ ॥
देहाध्यक्षतया देही पुर्य्यभिव्यक्तितः पुमान्[२८] ।
एकाकित्वादद्वितीयः केवलश्चोच्यते तु सः ॥ ३७ ॥
चिच्छक्त्यप्रतिबन्धेन प्रोच्यतेऽनावृतः पुमान् ।
सर्वस्वामितया चाऽऽत्मा[२९] क्षेत्रज्ञः क्षेत्रवेदनात्[३०] ॥ ३८ ॥
हृत्सरोवरश्रीपद्म - दलवृत्तिषु लीलया ।
चरन्निवानन्दमीनान् भुञ्जानो हंस[३१] उच्यते ॥ ३९ ॥
हकारेण बहिर्याति सकारेण विशन् पुनः ।
प्राणवृत्याऽनये[३२] चापि प्राण्यात्मा हंस उच्यते ॥ ४० ॥

---

२७. वैधर्म्यलक्षणा भिदा = विरुद्धधर्मस्वरूपो भेदः । एकात्मजातित्वेन सर्वेषामात्मनां साम्यमिति तात्पर्यम् ।

२८. द्र० शान्ति० २१०।३७ ।

२९. "अतति गच्छति सर्वं स्वामित्वेन व्याप्नोति इति आत्मा" (सार०) ।

३०. द्र० शान्ति० ३५१।६ ।

३१. हंसविषये इदं द्रष्टव्यम्—कठ० २।२।२ इत्यत्र हंसः शुचिषदित्यादिर्मन्त्रः पठ्यते । अत्राह शंकराचार्यः—"यद्यप्यादित्य एव मन्त्रेणोच्यते तथाप्यस्यात्मस्वरूपत्वमादित्यस्येत्यङ्गीकृतत्वाद् ब्राह्मणव्याख्यानेऽप्यविरोधः" । इति । 'असौ वा आदित्यो हंसः शुचिषदि'ति ब्राह्मणवाक्येन आदित्यो मन्त्रार्थतया व्याख्यात इति दृश्यते । शंकरव्याख्यानमध्यात्मदृशा । आह भट्टभास्करः—"अध्यात्ममधिदैवमधियज्ञं चाधिकृत्येमं मन्त्रं व्याचक्षते; अध्यात्मे तावत्—हंस आत्मा···अथादिदैवे—हंस आदित्यः···अथाधियज्ञे—हंसो रथो हन्ति पृथिवीमिति" ( तै० सं० भाष्यम् ) ।

३२. अनये = जीवनाय ।

शरीरागारहृद्व्योम-गुहायां बुद्धिभार्य्यया ।
व्यज्यमानस्तया सार्द्धं स्वपन्निव गुहाशयः[३३] ॥ ४१ ॥
त्रिगुणात्मकमायां स्वां सान्निध्याव परिणामयन् ।
मायीति कथ्यते चात्मा तत्कृतानृतवेषधृक् ॥ ४२ ॥
खान्येकादश भूतानि पञ्चैतानि तु षोडश ।
पुंसः कलास्तत्त्वतस्तु निरंशत्वात् स निष्कलः ॥ ४३ ॥
अहंशब्दः स्वामिवाची स्वामी साक्षी तु चेतसः ।
अतोऽहमिति शब्देन चिन्मात्रं प्रोच्यते बुधैः ॥ ४४ ॥
सर्वेश्वरः[३४] सर्ववेत्ता सर्वकर्त्ताऽद्वयः पुमान् ।
सामान्यादुच्यते यद्वद् राजा सर्वनराधिपः ॥ ४५ ॥
आत्माऽद्वैतस्य सूत्रेण जातिमात्रेण वर्णनात्[३५] ।
प्रलये हि विजातीय - द्वैतशून्यत्वमात्मनाम्[३६] ॥ ४६ ॥
असङ्गत्वान्नित्यशुद्धो नित्यबुद्धश्च चित्त्वतः ।
नित्यमुक्तस्तथा नित्य-निर्दुःखत्वात् पुमान् मतः ॥ ४७ ॥
इत्यादिगुरुशास्त्रोक्त - दिशा स्वानुभवेन च ।
वैधर्म्यादात्मनोऽनात्म-विवेकः[३७] क्रियतां बुधैः ॥ ४८ ॥

---

३३. "उक्तं च स्कन्दपुराणे—हकारेण बहिर्याति सकारेण विशेत् पुनः । हंस हंसेत्यमुं मन्त्रं जीवो जपति सर्वदा । षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः । एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा" इति ( द्र० योगचिन्तामणि पृ० १३–१४ ) ।

३४. चिदात्मा न स्वरूपत ईश्वरः, ईश्वरतायुक्तान्तःकरणोपाधिविशिष्ट आत्मैव ईश्वरः इति सांख्यीयं दर्शनम्—इत्यस्माकं मतम् ।

३५. द्र० सांख्यसूत्रम्—नाद्वैतश्रुतिविरोधो जातिपरत्वात् ( १।१५४ ) ।

३६. प्रलये आत्मनो विजातीयद्वैतशून्यता भवति; सजातीयद्वैतं न निषिद्धम्, आत्मनां व्यक्तिभेदस्य सत्त्वात् ।

३७. आत्मनोऽनात्मविवेकः = आत्मनः प्रकृत्यादिभ्यो भेदज्ञानम् ।

परिच्छेदचतुष्केण पुम्प्रकृत्योः सुविस्तरात् ।
वैधर्म्यगण उक्तोऽयं ध्यायिनामाशुमुक्तिदः ॥ ४९ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मवैधर्म्य-
गणपरिच्छेदः ।

—:: * ::—

## षष्ठः परिच्छेदः

विवेकमेव सद्युक्त्या मत्वा तदनुभूयते ।
राजयोगं[1] यथा कुर्यात् समासेन तदुच्यते ॥ १ ॥
अशक्तो राजयोगस्य हठयोगेऽधिकारवान् ।
वासिष्ठे हि वसिष्ठाय भुसुण्डेनैवमीरितम्[2] ॥ २ ॥

---

१. योगः खलु मन्त्र-लय-हठ-राजभेदेन चतुर्धेति आगमिनः, यथोक्तम्—योगो हि बहुधा ब्रह्मन् भिद्यते व्यवहारतः । मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगकः ॥ ( योगतत्त्वोपनिषद् ) । राजयोगस्वरूपमाह शिवानन्दः—"न तत्र किञ्चिद् वेद्यं संप्रज्ञायते इति असंप्रज्ञातः समाधिः । अयं निर्बीज इति निर्विकल्प इति निरालम्ब इति राजयोग इति चोच्यते" ॥ ( योगचिन्तामणि ) ।

२. भुसुण्डः खलु योगाचार्य इति विज्ञायते—"योगाचार्यैः भुसुण्डप्रभृतिभिः मन्त्र-लय-हठ-राज-भावना-सहज - योगसम्प्रदायभेदेन " इति ब्रह्मयोगि-व्याख्यानात् ( योगोपनिषद् ५।३ ) । वसिष्ठ—भुसुण्डसंवादो योगवासिष्ठे दृश्यते ( निर्वाणप्रक० पूर्वार्धं ) ।

ज्ञानावृत्ती राजयोगे प्राणायामासने हठे[3] ।
मुख्ये तेऽङ्गतयाऽन्योऽन्यं सेव्ये शक्त्यनुसारत:[4] ॥ ३ ॥

विषयेऽनन्तदोषा ये श्रुतिस्मृतिसमीरिता: ।
त आदौ परिद्रष्टव्याश्चित्तस्थैर्याय योगिभि: ॥ ४ ॥

कामबीजान्यनन्तानि सम्प्ररोहन्ति यद्धृदि ।
तत्राटवीनिभे ज्ञान-पुण्यशस्यं न वर्द्धते ॥ ५ ॥

दोषदृष्ट्यग्निसन्दग्धे कामबीजे तु चेतसि ।
गुरुशास्त्रहलै: कृष्टे सुक्षेत्रे तद्विवर्द्धते ॥ ६ ॥

सत्येष्वसत्तां प्रचुरां तथा रम्येष्वरम्यताम् ।
सुखेषु प्रचुरं दु:खं पश्यन् धीरो विरज्यते ॥ ७ ॥

[5]ब्रह्मलोकोऽपि नरको विनाशामेध्यपूरित:[6] ।
युक्तश्च स्वाधिकैरन्यैस्त्रैगुण्यादपि दु:खयुक् ॥ ८ ॥

---

३. एवं सत्यपि रागद्वेषादिशून्येन साधकेनैव हठयोगोऽभ्यसनीय इति पूर्वाचार्या: । उक्तं च सुन्दरदेवेन हठसंकेतचन्द्रिकायाम्—अयं हठयोग: साधकेन कामसंकल्पहीनेन समार्पितमनसाऽभ्यसनीय इति । उक्तं च योगतत्त्वोपनिषदि—यदा तु राजयोगेन निष्पन्ना योगिभि: क्रिया ॥ तदा विवेकवैराग्यं जायते योगिनो ध्रुवम् । ( १२९–१३० ) ।

४. य: चित्तनिरोधकरणेसमर्थ: स राजयोगेन ज्ञानमेव साधयेत्; य: पुनर्निरोधकरणेऽसमर्थ: स प्राणसंयमेन चित्तं निरुन्ध्यात् ततश्च राजयोगेन ज्ञानम् उत्पादयेत्—इति तात्पर्यम् ।

५. ब्रह्मलोक-स्वर्गदोषमधिकृत्य उक्तं महाभारते—स्वर्गकामो यजेतेति श्रुयते सततं श्रुति: । फलं प्रकल्प्यापूर्वं हि ततो यज्ञ: प्रवर्तते ॥ अत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमा: । न तत्राप्यस्ति सन्तोषो दृष्ट्वा दीप्तां परश्रियम् ॥ कृतस्य कर्मण: स्वर्गे भुज्यते कर्तृभि: फलम् । न चान्यत् क्रियते कर्ममूलोच्छेदेन भुज्यते ॥ सुखव्यासमनस्कानां सहस्ताभ्यागतापदम् । संज्ञामोहश्च पततां रजसा च प्रधर्षणम् ॥ प्रम्लानेषु च माल्येषु तत: पिपतिषोर्भयम् । आब्रह्मभवनादेते दोषा ब्रह्मन् सुदारुणा: । स्वर्गभाज: प्राप्नुवन्ति तस्मात् स्वर्गं न कामयेत् ॥ ( द्र० मोक्षकाण्ड पृ० ७१ ) । ब्रह्मलोक:=प्रजापतेर्हिरण्यगर्भस्य सत्यनामको लोक: ।

६. अत्र अमेध्यपदम् अमेध्यतावाचकम्—भावप्रधानो निर्देशोऽत्र ( धर्मिवाचकस्य धर्मपरत्वम् ) ।

तत्रत्यैरपि मुक्त्यर्थं यत्यते जन्मभीरुभिः ।
अतो ज्ञेयः समासेन लोकः सर्वोऽपि दुःखयुक् ॥ ९ ॥

इदं मे स्यादिदं मा स्यादितीच्छाव्यथितं मनः ।
स्वाभावात् तेन विज्ञेयं दुःखं चित्तेन सङ्गतिः[७] ॥ १० ॥

सुखं सुषुप्तिः परमा दुःखं विषयवेदनम्[८] ।
सुखदुःखसमासोऽयं किमन्यैर्बहुभाषितैः[९] ॥ ११ ॥

तस्मादनर्थनिर्भान् परीक्ष्य विषयान् सुधीः ।
उत्सृजेत् परमार्थार्थी बालरम्यानहीनिव[१०] ॥ १२ ॥

इत्यादिकानन्तदोष-दृष्ट्या रागस्य तानवे ।
मायाविवेकतः शुद्धमात्मानं चिन्तयेत् सदा ॥ १३ ॥

इदं तदिति निर्देष्टुं गुरुणाऽपि न शक्यते ।
उदासीनस्यात्मतत्त्वं स्वयमेव प्रकाशते[११] ॥ १४ ॥

बुद्धिबोधात्मको बुद्धि - साक्षी बुद्धेः परो विभुः ।
कूटस्थोऽहं चिदादित्य इत्येकाग्रोऽनुचिन्तयेत् ॥ १५ ॥

---

७. "अत्र चित्तेन सह संबन्धमात्रेणैव दुःखाव्यभिचारात् तस्यैव दुःखत्वमुक्तमिति मन्तव्यम्" ( सार० ) ।

८. वेदनेति शब्दस्य द्वावर्थौ । चित्स्वरूप आत्मा वेदनमित्युच्यते (उत्तर० ३।२), विषयज्ञानमपि । अत्र शब्दादिविषयज्ञानमेव वेदनपदेनोक्तम् ।

९. "परमा इत्यत्र परमम् इति पाठः समीचीनः" ( सार० ) ।

१०. बालरम्येति शब्देन विषयाणामापातरमणीयत्वं प्रदर्शितम् ।

११. "आत्मनः शक्यतावच्छेदकधर्माद्यभावेन शब्दागोचरतया नोपदेशार्हत्वम्, अतो गुरुणा शब्दद्वारेण इदं तद् आत्मस्वरूपम् इत्यादिरूपेण उपदेष्टुं नैव शक्यते इति भावः" (विवेक०) सोऽयं शक्यतावच्छेदकधर्मश्चतुर्विधः जातिर्द्रव्यं गुणः क्रिया चेति ।

[12]वृत्तिबोधो घटच्छिद्रमिव नाश्यल्प ईक्ष्यते ।
वस्तुतो वृत्तिबोधोऽहं पूर्णो व्योमवदक्षयः[13] ॥ १६ ॥
अन्तर्यद् दृश्यते सर्वं तद् बुद्धेर्वृत्तिरुच्यते ।
तेभ्यो दुःखात्मकेभ्योऽहं साक्षात्[14] तद्वीक्षिता पृथक् ॥१७॥
कर्मकर्तृविरोधो हि वृत्त्या वृत्तिप्रकाशने ।
वृत्तिधाराकल्पने च गौरवादिति निश्चितम्[15] ॥ १८ ॥
हर्षशोकभयक्रोध - लोभमोहमदैस्तथा ।
द्वेषाभिमानकार्पण्य — निद्रालस्यस्मरादिभिः ॥ १९ ॥
धर्माधर्मैश्च सम्पूर्णा बुद्धिर्दुःखमयी तु मे ।
आत्मानं दर्शयत्येव भास्करायेव रोगिणः[16] ॥ २० ॥
अहं सर्वगतं शान्तं परमात्मघनं शुचि ।
अचिन्त्यचिन्मात्रनभो विश्वदर्पणमक्षयम् ॥ २१ ॥
निरञ्जनं निराधारं निर्गुणं निरुपद्रवम् ।
निर्विशेषं सजातीयात् समस्तार्थविभासकम् ॥ २२ ॥
ब्रह्मविष्णुमहेशाद्याः स्थावरान्ताश्च चेतनाः ।
[17]अवैधर्म्यात्मिकाभेदादहमित्यनुचिन्तयेत् ॥ २३ ॥

---

१२. वृत्तिबोधः = वृत्तिविषयकत्वविशिष्टबोधः ।

१३. वृत्तिबोधः='घटमहं जानामि' इत्येवरूपं ज्ञानम् । घटोऽयम् इति वृत्तेः स्वरूपम् । वस्तुत उपाधिसंबन्धं विना अयं वृत्तिबोधः ( वृत्तेः प्रकाशकः अहंरूपः ) परिच्छेदहीनो नित्यश्च--इति तात्पर्यम् ।

१४. साक्षात्=वृत्तिम् अद्वारीकृत्य ।

१५. वृत्तिर्यदि स्वप्रकाश्येत्युच्यते तर्हि कर्मकर्तृविरोधः स्यात्; वृत्तिविषयकं वृत्त्यन्तरं वृत्तिप्रकाशं कुर्यात्—इति मते अनवस्था (=गौरवम्) स्यात्—इत्यर्थः ।

१६. द्र० आरोग्यं भास्करादिच्छेदिति वाक्यम् ।

१७. अवैधर्म्यात्मिकाभेदात्=वैधर्म्याभावरूपैक्यात् ।

अहमन्ये च पुरुषाः समचिद्व्योमरूपिणः ।
अत आत्मैक एवाहमिति श्रुतिषु गीयते ॥ २४ ॥
इति पश्यन् स्वभोगैश्च योगी विश्वं प्रपूजयेत् ।
आत्मयागोऽप्ययं प्रोक्तः श्रुत्युक्तः[१८] साङ्ख्ययोगिनाम् ॥ २५ ॥
"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति" ॥ २६ ॥
( मनु १२।७१ )
इत्येवं मनुनाऽप्यात्मयागो ज्ञानाङ्गमीरितः ।
तस्मादभयदानेन[१९] स्वभोगाद्यर्चनेन च ।
सम्मानयन् भूतजातमात्मानमनुचिन्तयेत् ॥ २७ ॥
ब्रह्मविष्णुशिवादीनां भोगे रागश्च हीयते ।
तेषां [२०]स्वसाम्यदृष्ट्याऽतः साम्यं योगी विचिन्तयेत् ॥२८॥
उत्पत्तौ प्रलये चैव सर्वावस्थासु सर्वदा ।
सर्वेषामेकरूपत्वे[२१] द्रष्टृ रागादिकं कुतः ॥ २९ ॥
विष्णवादयो महैश्वर्यं भुञ्जाना अपि नाधिकाः ।
मत्तोऽतोऽलं तदैश्वर्यैरविवेकजनप्रियैः ॥ ३० ॥
गुणकर्मादिभिः किञ्चिन्निरीक्ष्याधिकमात्मनः ।
तदर्थं यतते लोको नाहं पश्यामि मेऽधिकम् ॥ ३१ ॥
तथा न्यूनं न पश्यामि यदतिक्रमशङ्कया ।
देवा दैत्यजयायेव यतिष्ये तज्जयाशया ॥ ३२ ॥

---

१८. प्राणाग्निहोत्रोपनिषदि शरीरयज्ञविवरणं द्र० ।

१९. सर्वभूताभयप्रदानं खलु योगिनामेकं मुख्यं कर्मेति पूर्वाचार्याः । 'सर्वभूताभयप्रदानेन शरणमुपागतः खल्वहं योगधर्मः' इति व्यासभाष्यम् ( २।३२ ) अत्रानुसन्धेयम् । द्र० शान्ति० २४४।२८;२७८।२२; विष्णु० ३।९।३६; वसिष्ठ ध० सू० १०।१-२ च ।

२०. स्वसाम्यदृष्ट्या=स्वतुल्यतादर्शनेन ।

२१. एकरूपत्वे=अभिन्नप्रकारत्वे ।

अहं यथा तथैवान्ये आब्रह्म - नारका जनाः ।
दृश्यन्ते स्वात्मवत् प्रेम्णा पितृभ्रातृसुतादिवत् ॥ ३३ ॥
क ईश ईशितव्यो वा कः श्रेष्ठः कोऽधमोऽपि वा ।
अभिन्ने भेददृष्ट्या[22] स्यान्मृत्योर्भयमिति श्रुतिः[23] ॥३४॥
चिद्व्योमस्वेकरूपेषु ईशानीशादिरूपकः ।
रूपभेदो ह्यसन् सर्वः स्फटिके रूपभेदवत् ॥ ३५ ॥
धियां रूपैः पुमानेको[24] बहुरूप इवेक्ष्यते ।
वृकचर्मादिरूपाद्यैर्मायीव बहुरूपधृक् ॥ ३६ ॥
मामालिङ्ग्य निराकारं विविधाकारधारिणी ।
मायैवैका हि नृत्यन्ती मोहयत्यखिला धियः ॥ ३७ ॥
पुंसां भेदो बुद्धिभेदादम्बुभेदाद् यथा रवेः ।
व्योम्नश्च छिद्ररूपेण भेदः कुम्भादिभेदतः ॥ ३८ ॥
अतः शुद्धो बुद्धमुक्तः सर्वदा सर्वगोऽव्ययः ।
अहमन्ये[25] च तत्राहो शत्रुमित्रादिधीर्मृषा ॥ ३९ ॥
ब्रह्मणीशे हराविन्द्रे सर्वभूतगणे तथा ।
उत्तमाधममध्यत्व-विभागो मायया मृषा ॥ ४० ॥
त्रिगुणात्मकमायायास्त्रैविध्यादात्मनोऽपि हि ।
उत्तमाधममध्यत्व-त्रैविध्यं नैव हि स्वतः ॥ ४१ ॥
यथा देहे तथाऽन्यत्र चित्प्रकाशोऽयमव्ययः ।
व्यक्तताऽव्यक्ततामात्र-भेदो[26] ह्यन्तरबाह्ययोः ॥ ४२ ॥

---

२२. एकरूपे आत्मनि भिन्नप्रकारताबुद्ध्या इत्यर्थः ।

२३. द्वितीयाद् वै भयं भवति ( बृहदा० १।४।२ ); ते मृत्योर्यन्ति विततस्य पाशम् ( कठ० १।३।२ ) इति च ।

२४. एकः=एकरूपः; बहुरूपः=बहुप्रकारस्वरूपः ।

२५. अन्ये आत्मानः शुद्धा बुद्धा मुक्ता सर्वगा अव्यया इत्येवंरूपेण वचनव्यत्ययेन शब्दा योजनीयाः ।

२६. देहे चित्प्रकाशस्य व्यक्तताऽन्यत्र चाव्यक्तता—इत्येव भेदः; न पुनरेकत्रास्ति, अन्यत्र नास्तीति ।

एवमन्येऽपि पुरुषा बद्धमुक्ताविशेषतः ।
ईशानीशाविशेषाच्च पुरुषार्थो न मेऽस्त्यतः ॥ ४३ ॥
महानिद्रैव मे साध्वी दुःखभोगहरा प्रिया ।
अप्रिया मूढचित्तानामासाध्वी धीहतात्मनाम्[२७] ॥ ४४ ॥
चिदादर्शे मयि धियो यद्यपि प्रतिबिम्बनम् ।
तत्त्वतो नैव दोषाय तथापि त्याज्यमेव तत् ॥ ४५ ॥
स्वभावादस्य हेयत्वं स्वानुभूत्या हि सिध्यति ।
यथा कोऽपि परस्यापि वैरूप्यं न दिदृक्षति ॥ ४६ ॥
स्वामिन्यारोप्यात्मदोषान् साध्वीयमनुतप्यते[२८] ।
निर्दोषं स्वामिनं दृष्ट्वा निर्दोषा स्यात् पतिव्रता ॥ ४७ ॥
एवमस्या रूपभेदेऽप्येकरूपोऽस्मि सर्वदा ।
भुञ्जानो वाऽप्यभुञ्जानस्तां मदर्थामनन्यगाम्[२९] ॥ ४८ ॥
यथैकरूपतोपाधि - योगायोगदशास्वहो ।
आदर्शस्यामलस्यैव चिन्नभोदर्पणस्य मे ॥ ४९ ॥
दृश्यबुद्धिगता दोषाः साक्षात् तद्द्रष्टरि प्रभो ।
न सन्ति मयि मोहाद्या भास्करे भास्यदोषवत् ॥ ५० ॥
दुःखैर्बद्धा स्वमात्मानं त्यक्त्वा मद्भावमागता ।
मुच्यते दुःखबन्धाद् धीर्न मे मोक्षो न बन्धनम्[३०] ॥ ५१ ॥

---

२७. स्वबुद्धिदोषेण ये स्वात्मस्वरूपं न जानन्ति तेषामित्यर्थः ।

२८. पुरुषे वास्तवमालिन्यं नास्तीत्येतेन ध्वन्यते ।

२९. यदा चित्तं व्युत्थितं तदा भुञ्जानः, यदा निरुद्धं तदा अभुञ्जानः ( भुञ्जानः= जानन् ) । इत आरभ्य अध्यायसमाप्तिं यावद् विवेकाभ्यासकर्तुर्ध्यान-प्रकारो दर्श्यते । अतएव अस्मि-मे-मयीत्येवंविधाः शब्दाः प्रयुज्यन्ते ।

३०. इदमत्र विज्ञेयं यद् बुद्धिरेव बद्धा भवति दुःखयोगात्, सैव मुक्ता भवति दुःखसंबन्धहानितः । सोऽयं दुःखयोगोऽविवेकहेतुकः ।

कूटस्थासङ्गचिद्व्योम्नि धीदुःखप्रतिबिम्बनम् ।
योऽन्यो बन्धो भोगरूपः सोऽपि चिद्दर्पणे मृषा[३१] ॥ ५२ ॥

जाग्रदादित्रयावस्था-साक्षी ताभिर्विवर्जितः ।
अहं पूर्णश्चिदादित्य उदयास्तविवर्जितः ॥ ५३ ॥

दर्पणे मुखवद् विश्वं मयि बोधे न तात्त्विकम् ।
विभुत्वेऽपि च बाह्यान्तः सुषुप्त्यादावदर्शनात्[३२] ॥ ५४ ॥

मयि वाऽन्यत्र वा पुंसि केवलानुभवे विभौ ।
भाति यत् तद्विवर्त्तो धी-प्रतिबिम्बात्मकत्वतः[३३] ॥ ५५ ॥

शुक्तौ रजतवद् विश्वमतो मयि न दोषकृत् ।
मरीचौ तोयवत् तद्वद् व्योमादौ नगरादिवत्[३४] ॥ ५६ ॥

कालत्रयेऽपि नास्त्येव मयि विश्वं सनातने ।
अन्यत्रास्त्वथवा माऽस्तु बुद्धयादौ मम तेन किम् ॥ ५७ ॥

मयि सर्वं यथा व्योम्नि सर्वत्राहं यथा नभः ।
न सर्वं मयि सर्वत्र नाहं चालेपतः खवत्[३५] ॥ ५८ ॥

---

३१. बन्धो द्विविधः—दुःखाकारपरिणामरूपः एकः; अपरश्च प्रतिबिम्बात्मको भोगरूपः । प्रथमो बुद्धेरेव; द्वितीयस्तु यद्यपि पुरुषस्यैव, तथापि स मिथ्या पुरुषस्य असंगत्वात् कूटस्थत्वाच्च ।

३२. चैतन्यात्मके प्रतिबिम्बरूपं विश्वमन्यत् बाह्यं चान्यत् ।

३३. ज्ञानात्मके आत्मनि यत् प्रतिबिम्बरूपं वस्तु तन् मिथ्यैवेत्यर्थः । धीप्रतिबिम्बात्मकत्वतः=धियो यः प्रतिबिम्ब आत्मनि तदात्मकत्वतः ।

३४. व्योमनगरम्=गन्धर्वनगरम्; आह शंकराचार्यः—"स्वप्ने मायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति" (शारीरक भा० २।२।२८ ) ।

३५. यथाकाशे वस्तूनामवस्थानेऽपि विकारजनकसंयोगो न भवति तथा आत्मनि विकारजनकसंबन्धो नास्ति—इत्यर्थः ।

अत एवाविभागाख्याभेदेन[३६] क्षीरनीरवत् ।
[३७]ज्ञानात्मकमिदं विश्वं गायन्ति परमर्षयः[३८] ॥ ५९ ॥
जगन्मम मदर्थत्वान्मच्छरीरसुखादिवत् ।
यथा मम तथाऽन्येषां ममैवेति धियो भ्रमः ॥ ६० ।
वस्तुतस्तु न कस्यापि किमपि व्यभिचारतः ।
स्वामित्वस्याध्रुवत्वेन पान्थस्याऽऽवासगेहवत् ॥ ६१ ॥
एकं[३९] चिन्मात्रमस्तीह शुद्धं शून्यं निरञ्जनम् ।
सूक्ष्मात् सूक्ष्मतरं तत्र न जगन्न जगत्क्रिया ॥ ६२ ॥
दृश्यते सर्वदृश्याढ्या स्वस्वबुद्धिपरम्परा ।
चिन्मण्डलमहादर्शे प्रतिबिम्बमुपागता[४०] ॥ ६३ ॥
क्वचिद् व्यक्तं क्वचित् सूक्ष्मं नभः सर्वत्र तिष्ठति ।
यथा तथा चिदाकाशं धीदेशेऽन्यत्र[४१] च स्थितम् ॥ ६४ ॥
चिदाकाशमयं विश्वं यतोऽतो धीरितस्ततः ।
भ्रमन्ती तत्र तत्रैव भासतेऽर्के घटादिवत् ॥ ६५ ॥

---

३६. "ज्ञानज्ञेययोः पार्थक्येन ग्रहासंभवात् मोहहेतुकम् ऐक्यज्ञानम् अविभागः तद्रूपाभेदेन न तु तादात्म्यसंबन्धरूपाभेदेनेत्यर्थः" (सार०) ।

३७. ज्ञानेन आत्मना सह अविभागदर्शनाद् विश्वमिदं ज्ञानात्मक मित्युद्घुष्यते ।

३८. तु० ज्ञानस्वरूपममलं निर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ( विष्णु० १।२।६ ) ।

३९. एकम्=एकरूपमसंहतमित्यर्थः; न तु एकसंख्यकम् ।

४०. "विषयाकारेणाकारिता बुद्धिः स्वच्छस्यात्मनः सान्निध्येन आत्मनि प्रतिफलति तत्प्रतिबिम्बवत् एवात्मनः संसारदशाया मुपलब्ध आत्मा विषयवत्तया प्रतीयते इति भावः" ( सार० ) ।

४१. धीर्न देशव्यापिनी न तस्याः दैर्घ्यं विस्तारं च विद्यते, अतः धीदेशशब्देन बुद्धिवृत्ति-कालो विवक्षितः ।

धर्माधर्मौ जन्ममृत्यू सुखदुःखादि चाखिलम् ।
जाग्रत्यपि मृषा स्वप्न इव जन्मादिकं मम ॥ ६६ ॥
दृश्ययोगवियोगाभ्यां चितौ जन्मविनाशधीः ।
अभिव्यक्त्यनभिव्यक्ति-दोषाभ्यां शशिनो यथा ॥ ६७ ॥
महासुषुप्तौ भवजन्ममृत्युदुःस्वप्नधाराः क्षणभङ् गुरा धीः[४२] ।
पश्याम्यहं ताभिरलिप्तरूपो घनैरुपेतैर्विगते रवेः किम् ॥ ६८ ॥
इत्येवं सततं ध्यायन्नेकाग्रमनसा सुधीः ।
साक्षात्करोत्यात्मतत्त्वं वागगोचररूपतः ॥ ६९ ॥
स्वरूपं निर्मलं शान्तं मनस्त्यजति चेत् क्षणम् ।
तदैव दृश्यसंस्कार-शेषात्[४३] सङ्क्षुभ्यतीन्द्रियम् ॥ ७० ॥
उत्थितानुत्थितांस्तत्र इन्द्रियारीन् पुनः पुनः ।
विवेकेनैव वज्रेण हन्यादिन्द्रो गिरीनिव ॥ ७१ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे राजयोगप्रकारपरिच्छेदः ॥

—: ** :—

## सप्तमः परिच्छेदः

एवमात्मानुभविनो जीवन्मुक्तस्य[१] लक्षणम् ।
स्पष्टं वक्ष्ये भवेद् येन ज्ञानाज्ञानपरीक्षणम् ॥ १ ॥
श्रवणान्मननाद् वाऽपि [२]अन्यथाऽऽत्मज्ञताभ्रमात् ।
कुर्य्याद् गुरुमविद्वांसं स्याच्चाज्ञो ज्ञाभिमान्यपि ॥ २ ॥

---

४२. 'क्षणभङ्गुरा धियः' इति पठ्यते सर्वेषु संस्करणेषु । पाठोऽयं छन्दोदृष्ट्या असाधुः, अतोऽस्माभिः 'धीः' इत्येव पदं मूले स्थापितम ।

४३. दृश्यवस्तुविषयको यः संस्कारोऽवशिष्यते सः ।

१. जीवन्मुक्तिः सांख्यैरभ्युपगम्यते । तथा च सूत्रम्—जीवन्मुक्तश्च ( ३।७८ ) । क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवतीति व्यासभाष्यम् (४।३०) ।

२. अन्यथा निदिध्यासनादित्यर्थः ।

नैश्वर्य्यानागतज्ञत्वादिकं ज्ञानस्य लक्षणम् ।
तद्वतेऽपि हि कैवल्यं योगभाष्यकृतेरितम्[3] ॥ ३ ॥

[4]श्रौतस्मार्त्तानि वाक्यानि ज्ञानिनो मोक्षभागिनः ।
लक्षकाण्येव लिख्यन्ते विश्वासातिशयाय वै ॥ ४ ॥

यत्र सर्वाणि भूतानि आत्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः[5] ॥ ५ ॥
( ईश उप० ७ )

यः सर्वत्रानभिस्नेहस्तत् तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६ ॥
( गीता २।५७ )

न विस्मरति सर्वत्र यथा सततगो[6] गतिम् ।
न विस्मरति निश्चेत्यं चिन्मात्रं प्राज्ञधीस्तथा ॥ ७ ॥

नोदेति नास्तमायाति सुखे - दुःखे मुखप्रभा ।
यथापूर्वस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥८ ॥
( योगवा० ३।९।६ )

यो जागर्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते ।
यस्य[7] निर्वासना बोधः स जीवन्मुक्त उच्यते ॥ ९ ॥
( योगवा० ३।९।७ )

रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ १० ॥
( योगवा० ३।९।८ )

---

३. उक्तं च व्यासभाष्ये—"एतस्यामवस्थायां कैवल्यं भवति ईश्वरस्यानीश्वरस्य वा विवेकज्ञानाभ्यासिन इतरस्य वा" इति ( ३।५५ ) ।

४. एतत्प्रकरणगताः श्लोका उक्तेभ्यो योगवासिष्ठादिभ्योऽन्यत्रापि उपलभ्यन्ते: द्र० वराहोपनिषद्, महोपनिषच् च ।

५. विज्ञानभिक्षुमतानुसारेण—आत्माभेदः=सर्वात्मनामविभागः, न पुनरात्मैकत्वम् । उपनिषदि यस्मिन्निति पठ्यते मन्त्रादौ ।

६. सततगः = वायुः ।

७. निर्वासनः = वासनाहीनः; वासना=मिथ्याज्ञानसंस्कारः ।

तस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते ॥ ११ ॥
(योगवा० ३।६।६)

अपि शीतरुचावर्के अत्युष्णेऽपीन्दुमण्डले ।
अप्यधःप्रसरत्यग्नौ जीवन्मुक्तो न चान्यधीः ॥ १२ ॥
चिदात्मन इमा नित्यं प्रस्फुरन्तीह शक्तयः[८] ।
इत्यस्याऽश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ १३ ॥
परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ।
तदेवाऽस्वादयत्यन्तर्नररसङ्ग[९] रसायनम् ॥ १४ ॥
(योगवा० ५।७४।७३)

एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ १५ ॥

यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः, सुखी ।
गम्भीरश्च प्रसन्नश्ज गिराविव महाह्रदः ॥ १६ ॥

परानन्दरसाक्षुब्धो रमते स्वात्मनाऽऽत्मनि ।
सर्वकर्मपरित्यागी नित्यहृष्टो निरामयः ॥ १७ ॥

न पुण्येन न पापेन नेतरेणापि लिप्यते ।
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी च स सम्राडिव राजते ॥ १८ ॥

वर्णाधर्माश्रमाचार-शास्त्रयन्त्रणयेप्सितः[१०] ।
निर्गच्छति जगज्जालात् पञ्जरादिव केशरी ॥ १९ ॥

---

८. प्रकृतिपरिणामभूताः शक्तय इति ज्ञेयम् ।

९. वरसंग, परसंग (पाठा०) ।

१०. शास्त्रमन्त्रनयेप्सित इत्यपपाठः । शास्त्रे या यन्त्रणा नियमनं तेन वर्जित इत्यर्थो मूलपाठस्य ।

वाचामतीतविषयो विषयाशादशोज्झितः[११] ।
कामप्युपगतः शोभां शरदीव नभस्तलम् ॥ २० ॥
निःस्तोत्रो निर्नमस्कारः पूज्यपूज विवर्जितः ।
संयुक्तो वा वियुक्तो वा सदाचारनयक्रमैः ॥ २१ ॥
एतावदेव खलु लिङ्गमलिङ्गमूर्त्तेः ।
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
तज्ज्ञस्य यन्मदनकोपविषाद्लोभ–
मोहापदामनुदिनं निपुणं तनुत्वम्[१२] ॥ २२ ॥
तुर्यविश्रान्तियुक्तस्य प्रतीपस्य भवार्णवात् ।
न कृतेनाकृतेनार्थो न श्रुतिस्मृतिविभ्रमैः[१३] ॥ २३ ॥
तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा[१४] ।
ज्ञानसम्प्राप्तिसमये मुक्त एवामलाशयः ॥ २४ ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इति श्रुतेः[१५] ॥ २५ ॥

---

११. विषयाज्ञादृशेक्षित इत्यपपाठः । 'विषयकामनावस्थया परित्यक्तः' इत्येव मूलोक्तपाठस्यार्थः ।

१२. अलिङ्गमूर्तेः जीवन्मुक्तस्येति शेषः । अलिङ्गा लौकिकलिङ्गशून्या मूर्तिर्यस्य । तज्ज्ञस्य = आत्मानं विजानतः ।

१३. तुर्यविश्रान्तियुक्तस्य=जाग्रदादि-अवस्था - त्रयातीतात्मवस्तुपरस्य; भवार्णवात् प्रतीपस्य = संसारविपरीतो य आत्मा तम् आश्रितस्य । श्रुतिस्मृतिविभ्रमैः =अज्ञजनबोधकैः शास्त्रवाक्यैः; अविद्यावद्-विषयाणि शास्त्राणि—इति मतमत्र स्मार्यम् । ज्ञानोत्तर न किमपि प्रयोजनं शास्त्रस्येति भावः ।

१४. उप० तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥ ( परमार्थसार ८१ ) ।

१५. मोक्षे चित्तं स्वयोनावुपशाम्यतीति सत्कार्यवाददृष्ट्याऽभ्युपेयमेव । यथाह— "यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति" इति ( मैत्रायणी ६।३४।१ )।

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ २६ ॥
( योगवा० ३।९।१४ )

अनाशाखिलशैलादि – प्रतिबिम्बे हि यादृशी ।
स्याद् दर्पणे दर्पणता केवलात्मस्वरूपिणी[१६] ॥ २७ ॥
( योगवा० ३।४।५६ ) ।

अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ।
स्यात्तादृशी केवलता स्थिते द्रष्टर्य्यवीक्षणे[१७] ॥ २८ ॥
( योगवा० ३ ४।५८ ) ।

चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यनिलयं यदनाधि निरामयम्[१८] ॥ २९ ॥

न शून्यं नापि चाकारं न दृश्यं न च दर्शनम्[१९] ।
अनाख्यमनभिव्यक्तं तत् किञ्चिदवशिष्यते ॥ ३० ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे जीवन्मुक्तिपरममुक्त्योः परिच्छेदः ।

इति साङ्ख्यसारस्योत्तरभागः ।

सांख्यसारः समाप्तः ॥

— ** : —

---

१६. स्व-स्वरूपमात्रपर्यवसन्नेत्यर्थः ।

१७. द्रष्टरि अवीक्षणे स्थिते = यदा आत्मा वृत्तिसंबन्धहीनरूपेण अवतिष्टते तदा । अवीक्षणे=दृश्यसंबन्धशून्ये ।

१८. अनाधि=आधिहीनं ( आधिः=मानसी पीड़ा ) ।

१९. अत्र दर्शनं वृत्त्यात्मकज्ञानम् नतु स्वरूपज्ञानम्

इति रामशंकर-भट्टाचार्य-विरचिता सांख्य-सार-टीका समाप्ता ।

Dr. A. K. Chatterji